ञ्चसहस्रश्लोकप्रमाणं प्राकृतभाषामयम् । अस्मिन्नपि ग्रन्थे कुमारपालप्रतिबोधसमाना जैनधर्मतत्त्वप्रबोधनप्रधाना बह्व्यः पुराणकथाः कल्पिताः सन्ति । अस्य ग्रन्थस्य रचनाऽपि कुमारपालप्रतिबोधवत्—यथा चाधस्ताद्विज्ञापितमस्माभिः—अणहिल्लपुरपत्तनस्थश्रीसिद्धपालक-विवसतावेव समाप्तिं प्रापत्[1] । ग्रन्थान्ते यद्यपि रचनासमयो नोपलभ्यते स्पष्टोल्लिखितस्तथापि पूर्वापरानुसन्धानेन ज्ञायते यत् सा हि प्रथमा कृतिरस्य सूरिवरस्य । पत्तनस्थे कस्मिंश्चित्कोशे दृष्टचरोऽस्माकमेको हस्तलेखोऽस्य चरित्रस्येति ।

द्वितीयो ग्रन्थ एकशतपद्यप्रमाणं सूक्तिमुक्तावलिप्रकरणम् । अस्य प्रकरण-ग्रन्थस्य प्रथमपद्यस्य 'सिन्दूरप्रकर' इत्येवंशब्दैः प्रारब्धत्वात् 'सिन्दूरप्रकर' इति नाम्ना, तथैव सोमप्रभाचार्यकृतत्वेन शतपद्यप्रमाणत्वेन च 'सोमशतक' इति नाम्नाऽप्ययं प्रबन्धः प्रसिद्धः प्रतिभाति । अस्मिन् प्रबन्धे भर्तृहरिनिर्मितवैराग्यशतकशैल्या अहिंसा-सत्य-अस्तेय-शील-सौजन्य-क्षमा-त्याग-वैराग्यादयो विविध विषयाः संक्षेपेण किन्तु सरलेन सरसेन च बन्धेन निबद्धा आसते । हृदयङ्गमभावभरितत्वेन कोमलपदावलिपूरितत्वेन चायं प्रबन्धो न केवलं श्वेताम्बरजैनसंप्रदाय एव जनप्रियो जातोऽस्ति, अपि तु दिगम्बरजैनसंप्रदायेऽपि तथैव प्राप्तसत्कारः प्रतीतोऽस्ति । अनयोरुभयोर्जैनसम्प्रदाययोर्मध्येऽनेकेषां विदुषामितरेषां च कण्ठे कण्ठालङ्कारवद् विराजतेऽद्याप्ययं प्रबन्धः । प्रस्तुत-कुमारपालप्रतिबोधेऽपि प्रसङ्ग-

---

१ एतद्ग्रन्थप्रशस्तिरपि प्रायः कुमारपालप्रतिबोधप्रशस्तिसमानैव । तथा हि—

चन्द्रार्कौ गुरुटद्धनभसः कर्णावतंसौ क्षितेर्धुर्यौ धर्मरथस्य सर्वजगतस्तत्त्वावलोके दृशौ ।
निर्वाणावसथस्य तोरणमहास्तम्भावभूताङ्गभावेकः श्रीमुनिचन्द्रसूरिरपरः श्रीमानदेवप्रभुः ॥

शिष्यस्तयोरजितदेव इति प्रसिद्धः सूरिः समग्रगुणरत्ननिधिर्बभूव ।
प्रीतिं यदङ्घ्रिकमले मुनिभृङ्गराजिरास्वादितश्रुतरसा तरसा बबन्ध ॥

श्रीदेवसूरिप्रमुखा बभूवुरन्येऽपि तत्पादपयोजहंसाः ।
येषामबाधारचितस्थितीनां नालीकमैत्री मुदमाततान ॥

विशारदशिरोमणेरजितदेवसूरिप्रभोर्विनेयतिलकोऽभवद् विजयसिंहसूरिर्गुरुः ।
जगत्त्रयविजेतृभिर्विमलशीलवर्माहतं व्यभेदि न कदाचन स्मरशरैर्यदीयं मनः ॥

गुरोस्तस्य पदाम्भोजप्रसादान्मन्दधीरपि । श्रीमान् सोमप्रभाचार्यश्चरित्रं सुमतेर्व्यधात् ॥

प्राग्वाटान्वयसागरेन्दुरसमप्रज्ञः कृतज्ञः क्षमी वाग्मी सूक्तिसुधानिधानमजनि श्रीपालनामा पुमान् ।
यं लोकोत्तरकाव्यरञ्जितमतिः साहित्यविद्यारतिः श्रीसिद्धाधिपतिः कवीन्द्र इति च भ्रातेति च व्याहरत् ॥

सूनुस्तस्य कुमारपालनृपतिप्रीतेः पदं धीमतामुत्तंसः कविचक्रमस्तकमणिः श्रीसिद्धपालोऽभवत् ।
यं व्यालोक्य परोपकार-करुणा-सौजन्य-सत्य-क्षमादाक्षिण्यैः कलितं कलौ कृतयुगारम्भो जनैर्मन्यते ॥

तस्य पौषधशालायां पुरेऽणहिलपाटके । निष्प्रत्यूहमिदं प्रोक्तं परार्थान्तं ........ ॥

अनाभोगात् किञ्चित् किमपि मतिवैकल्यवशतः किमप्यौत्सुक्येन स्मृतिविरहदोषेण किमपि ।
मयोत्सूत्रं शास्त्रे यदिह किमपि प्रोक्तमखिलं क्षमन्तां धीमन्तस्तदसमदयापूर्णहृदयाः ॥

वशादनेकेषु स्थलेषु प्राप्यन्ते ग्रन्थकारेणास्य ग्रथितानि कतिपयानि पद्यजातान्यस्य जनप्रियस्य प्रबन्धस्येति ।

तृतीयो ग्रन्थः शतार्थकाव्यं नाम । अयं ग्रन्थः सोमप्रभाचार्यस्य संस्कृतभाषाज्ञानविषयकमनुपमं पाण्डित्यं प्रकटयति । इदं काव्यं केवलं

'कल्याणसारसवितानहरेक्षमोह कान्तारवारणसमानजयाद्यदेव ।
धर्मार्थकामदमहोदयवीरधीर सोमप्रभावपरमागमसिद्धसूरे ॥'

इत्येवंरूपमेकपद्यात्मकमेवास्ति । परन्तु, अस्यैकस्यैव वसन्ततिलकावृत्तस्य शतसंख्याकैर्भिन्नभिन्नैरर्थैर्विलक्षणं विवरणं कृत्वा, इममेकं पद्यात्मकं क्षुद्रकाव्यमपि शतपद्यप्रमाणस्वरूपां खण्डकाव्ययोग्यप्रतिष्ठां प्रापितवान् स महामतिः सूरिसुकृती । अनेनैव प्रगल्भेन कविकर्मणाऽयं सूरिर्विद्वत्समाजे 'शतार्थिकः' इत्येतेन पाण्डित्यसूचकेन बिरुदेन प्रसिद्धो जातः । यथा च—

'सोमप्रभो मुनिपतिर्विदितः शतार्थी ।'

—मुनिसुन्दरसूरिरचितगुर्वावल्याम् ।

'ततः शतार्थिकः ख्यातः श्रीसोमप्रभसूरिराट् ।'

—गुणरत्नसूरिकृतक्रियारत्नसमुच्चये ।

एतत्काव्यान्तर्गतान् स्वविवक्षितान् शतमर्थान् प्रकटीकर्तुं स्वयमेव ग्रन्थकारेणैका स्पष्टा व्याख्या विहिता । अस्यां व्याख्यायामादौ पञ्चभिः श्लोकैर्वक्ष्यमाणार्थजातस्यानुक्रमणिका आवेदिता अस्ति, अन्ते च शिष्यमुखव्याजमालम्ब्य पञ्चभिः पद्यैः स्वीया प्रशस्तिरपि संसूचिताऽस्ति । एतत्प्रशस्त्यनुसारेण विज्ञायते यत् ग्रन्थकारो गृहस्थावस्थायां प्राग्वाटजातीयो वैश्योऽभूत् । तस्य पितुर्नाम 'सर्वदेवः,' पितामहस्य च 'जिनदेवः' आसीत् । जिनदेवः स्वसमय एको लब्धप्रतिष्ठः श्रावकः, कस्यचिद् राज्ञो महामात्यश्चासित स्म । सोमप्रभेण कौमार एव जैनी दीक्षा स्वीकृता । असाधारणबुद्धिबलात् स्वल्पेनैव कालेन सर्वशास्त्रे निपुणत्वं समासाद्य प्रायः सुमध्यम एव वयसि स आचार्यपदसदृशं सर्वोच्चमं पदं संप्राप्तवान् । अस्मिन् शतार्थवृत्तव्याख्यान आदिभागे चतुर्विंशतिजिन-सिद्ध-सूरि-उपाध्याय-मुनिपुण्डरीक-गौतम-सुधर्म-पञ्चव्रती-समय-श्रुतदेवी-पुरुषार्थ-विधि-नारद-देवविष्णु-बलभद्र-श्रीप्रद्युम्न-शंख-शिव-गिरिसुता-स्कन्दादीनां जैन-वैदिकादिमतपूज्यव्यक्तीनां क्रमशः व्याख्यानानि विशदीकृत्य, मध्ये च हैरम्ब-कैलास-ग्रह-दिक्पाल-जयन्त-घन-मदिरा-कनक-अब्धि-सिंह-हय-करि-सरोज-भुजगादिसचेतनाचेतनप्रसिद्धपदार्थानामर्थाख्यानमुद्घाट्य, अन्ते वादि-

---

द्रष्टव्यानि १८०-१०७-४२२ संख्याङ्कितपृष्ठेषु मुद्रितानि संस्कृतपद्यानि ।

देवसूरि-हेमचन्द्राचार्यसदृशाः जैनधर्मप्रभावकपुरुषाः, जयसिंहदेव-कुमारपाल-अजयदेव-मूल-राज-नामधेयाः क्रमोत्पन्नाश्चत्वारश्चौलुक्यनरवराः, कविसिद्धपालसमो नागरिकप्रवरः, अजि-तदेव-विजयसिंहनामकं स्वीयगुरुद्वयम्, इत्येवंरूपाणां स्वसमानकालवर्तिनामैतिहासिकपुरुषा-णामपि अर्था आलिखिताः सन्ति। (द्रष्टव्यं परिशिष्टम्।)

एवं कुमारपालप्रतिबोधसहिताः प्रस्तुतग्रन्थकारकृता एते चत्वार एव ग्रन्थाः दृष्टी-गोचरमायाता अस्माकमद्यावधि। परन्तु, शतार्थवृत्तव्याख्यायां कुमारपालविषयके अर्था-ख्याने 'यद्वोचाम' इत्येवं कृत्वा यत् पद्यद्वयं समुद्धृतं सन्दृश्यते तन्न कापि उपर्युक्तासु अस्म-द्दृष्टासु कृतिषु नयनपथमवतीर्णमस्मदीयम्। अतो ज्ञायत एतद्व्यतिरिक्ता ऽन्या ऽपि काचित् कृतिरवश्यंभाविनी प्रस्तुतसूरेरिति।

प्रकृतप्रतिबोधस्य रचना मुख्यतया प्राकृतभाषामाश्रित्यैव कृता ग्रन्थकृता, तथापि, अन्तिमे प्रस्तावे कतिचित् कथाः संस्कृतभाषाम्, कियत्यश्च अपभ्रंशभाषामपि आश्रित्य विरचिता उपलभ्यन्ते। तेनास्य ग्रन्थकारस्यैतासां तिसृणां हि भाषाणां मध्ये समानं पाण्डित्यं प्रकटीभवति, इत्यत्र नाशंका अस्माकम्। यद्यपि, एवमुक्तप्रकारेण, अयं सोमप्रभसूरिः समर्थप्रतिभावान् विद्वान् आसीत्,—तत्र विषये नास्ति कश्चित्सन्देहोऽस्माकम्—तथापि प्रस्तुतग्रन्थे तस्य तादृश्याः प्रतिभायाः प्राञ्जलं प्रमाणं न किमपि समुपलब्धमस्माभिः। अस्ति खल्वस्य रचनाशैली सुबोधा, सरला, साधारणजनहृदयङ्गमा च, किन्तु विदग्धजनचेतश्च-मत्कारिणी तु नास्तीत्येवमस्मदभिप्रायः। इति।

अपि च, अस्य ग्रन्थस्य रचनासमयम्, कर्तुः पाण्डित्यम्, महत् प्रमाणं च श्रुत्वा, ज्ञात्वा वा प्रथमक्षणे तु, पुरावृत्तजिज्ञासुजनानां मनसि, इयमेव महती आशा समुत्पद्येत यत्—एतस्मिन् विशाले ग्रन्थे कुमारपाल—हेमचन्द्रसम्बन्धिन्यस्तत्कालभाविन्यश्चान्यान्या अनेका अन्यत्राप्राप्ता इतिवृत्तसंसूचकवार्ताः सन्दृब्धाः भवेयुः। परन्तु, अस्य ग्रन्थस्य साद्यन्तावलोकने कृते साऽऽशा निराशामात्रमेव प्रतिभास्यति विदुषामिति निवेदयतामस्मा-कमप्यत्र बाढं निराशा आविर्भवति। यतः, अन्यत्रानुपलब्धानां केषांचिन्नवीनवृत्तान्तानां संप्राप्तिस्तु आस्तां दूरे; किन्तु, प्रभावकचरित्र—प्रबन्धचिन्तामणि—कुमारपालप्रबन्धसदृशेषु एतस्माद्ग्रन्थादर्वाचीनेषु संक्षिप्तग्रन्थेषु अपि उक्तनृप—सूरिवरविषयको यावान् वृत्तान्तः संप्राप्यते तावानपि प्रस्तुतप्रतिबोधे नोपलभ्यते। इत्यत ऐतिहासिकदृष्ट्या न कश्चिद् वि-शेषोल्लेखयोग्यो वृत्तान्तो विज्ञायतेऽस्माकमत्र प्रबन्धे।

परन्तु, तत्र विषये ग्रन्थकारः स्वल्पमपि उपालम्भयोग्यो नास्ति। यतः, तस्य प्रस्तु-तग्रन्थप्रणयनप्रयासो न प्रबन्धनायकस्य समस्तजीवनचरितवर्णनमुद्दिश्य, किन्तु केवलं

यत्प्रकारं धर्मोपदेशं श्रुत्वा कुमारपालस्य जैनधर्मे सुश्रद्धा समुत्पन्ना, तादृशमुपदेशं विदधत एककथाग्रन्थस्य विरचनमेव ग्रन्थकारस्य प्रधान उद्देशः, इति विज्ञेयम्। एतद्भावसूचकः स्पष्टोल्लेखः प्रबन्धकारेण स्वयं ग्रन्थारम्भे निम्नोद्धृतेन गाथायुगलेन कृतोऽस्ति। यथा—

जइ वि चरियं इमाणं मणोहरं अत्थि बहुयमन्नं पि।
तह वि जिणधम्मपडिबोहवंधुरं किंपि जंपेमि॥
बहुभक्खजुयाइ वि रसवईए मज्झाओ किंचि भुंजंतो।
नियइच्छाअणुरूवं पुरिसो किं होइ वयणिज्जो॥

( पृष्ठ— ३, गाथा ३०-३१ )

यद्यपि, उक्तरीत्या नास्त्यत्र ग्रन्थ ऐतिहासिकवृत्तान्ताधिक्यम्, तथापि यावदस्ति तावत्तु सकलमेव पूर्णतया विश्वसनीयमिति स्पष्टं स्वीकारार्हमेव। यतोऽयं ग्रन्थकारः केवलं कुमारपालस्य समानकालीन एव नासीत्, किन्तु तस्य सविशेषपरिचितः अत एव तदन्तरङ्गजीवनवृत्तान्तज्ञाताऽपि समभवत्।

कुमारपालस्य जैनधार्मिकजीवनवृत्तमुल्लिखन्तस्तत्समसमयवर्तिनस्त्रयो लेखका अभूवन्। तत्राद्यस्तु तस्य धर्मगुरुः साक्षात् श्रीहेमचन्द्रसूरिरेव। तेन प्राकृतद्व्याश्रयापरनामनि कुमारपालचरिते, तथा श्रीवीरचरित्रेऽपि तद्विषयकः कियान् संक्षिप्तः किन्तु सारगर्भितः समुल्लेखोऽकारि। द्वितीयो लेखको मंत्रियशःपालनामा श्रावकः कविवर आसीत्। तेन कुमारपालस्याध्यात्मिकं जीवनमुद्दिश्य 'मोहराजपराजय' नामकं पञ्चाङ्कं नाटकं व्यरचि। अयं च कविः स्वात्मानं कुमारपालोत्तराधिकारिनृप—अजयदेवचक्रवर्तिचरणसेवित्वेन निर्दिशति स्म। अतोऽयमपि प्रायः कुमारपालसमकालीन एवेति निर्विवादम्। अनेन कविना, कुमारपालद्वारा तत्समग्रराज्यात् प्राणिवध—मांसाशन—असत्यभाषण—द्यूतरमण—वेश्यागमन—परधनापहरण—इत्यादीनि जनसमाजावनतिकराणि दुष्टव्यसनानि यथा सर्वथा बहिष्कृतानि जातानि तत्सर्वं वृत्तान्तं मनोहरया काव्यवर्णनपद्धत्या 'मोहराजपराजय' नाटके निर्वर्णितमस्ति। तृतीयो लेखकः प्रस्तुतप्रतिबोधकर्ता सोमप्रभसूरिः। एते त्रयोऽपि विद्वांसः प्रमाणभूता लब्धप्रतिष्ठाश्च, अत एतत्कृते वर्णने स्वल्पमपि सन्देहास्पदं मिथ्याभूतं वा कथनं भवेत्; इति न मन्येतुं शक्यतेऽस्माभिः।

एतेषां त्रयाणामपि लेखकानां विश्वस्तात् कथनात् प्रतीयते यत् कुमारपाल एकः परमधार्मिकः परमार्हतो जैननृपोऽभूत्। तेन संपूर्णतया जैनधर्मः स्वीकृतः, जैनधर्मप्रतिपादितान् आचारान् विचारांश्च सम्यग्रीत्या परिपालनार्थं यथाशक्ति प्रयत्न आचरितः, तथैव तत्तत्त्वप्रचाराय प्रभावसंस्थापनाय च सर्वत्र यथायोग्यमुदारा उद्योगा आरब्धाः सन्ति

स्म। स स्वभावेन सरलः, विचारैरुदारश्चाभूत्। धर्मेण परमजैनो भूत्वापि, न कदाचिदन्य-धर्मं प्रति तेन स्वकीयोऽनादरभावः प्रकटीकृतः, न कश्चिद् अन्य धर्मानुयायी तिरस्कृतश्च।

वर्तमानगुर्जरनरेशश्रीमत्सयाजीरावमहाराजशासनवत् तत्प्रतिकृतिस्वरूप-तादृशसदाचारि-सद्गुणानुरागि-कुमारपालनृपशासनेऽपि सर्वाः प्रजाः स्वस्वयोग्यान् धर्मार्थकाममोक्षरूपान् चतुरः पुरुषार्थान् परस्पराविरोधरूपेण आचरन्त्यः शान्ति-सुख-सन्तोष-स्वास्थ्यलाभमकार्षुः। इति भद्रम्।

वीरनि० सं. २४४६, भाद्रपदपूर्णिमा।
पुण्यपत्तने श्रीभारतजैनविद्यालयः।

मुनिराज–जिनविजयः।

सूचना—अस्मिन् समग्रेऽपि ग्रन्थे ऐतिहासिकदृष्ट्या यावदुपयोगि वर्णनमुपलभ्यते, तावत् सर्वमपि, अतः समुध्दृत्य, 'कुमारपालप्रतिबोधसंक्षेप' नामकशिरोलेखस्याधस्तात्– पृथग् मुद्रितमग्रेतनेषु पत्रेषु। अत ऐतिहासिकवृत्तमात्रजिज्ञासुभिर्विद्वद्भिस्तदेव विशेषतो दृष्टव्यम्। तेन समग्रग्रन्थस्य रहस्यं सुलभतया शीघ्रतया च सुज्ञातं भविष्यतीति।

---

# परिशिष्टम् ।

कल्याणसारसवितानहरे ! क्षमोहकान्तारवारण ! समान ! जयाऽऽद्यदेव ! ।
धर्मार्थिकाऽमद ! महोदयवीर ! धीर ! सोमप्रभाव ! परमाऽऽगमसिद्ध ! सूरे ! ॥

अथ षट्तर्कीसंपर्कलम्पटदिक्पटपाटनप्रकटप्रमतिजितदेवसूरिः श्रीदेवसूरिः । हे सूरे ! आचार्य !, आद्यदेव ! आद्यो देव इति शब्दो यस्य देवसूरेः—इत्यर्थः । भद्राऽम्भोजवनरवे ! । क्षमः क्षपणः कुमुदचन्द्रदिक्पटः, तस्य ऊहस्तर्कः स्त्रीनिर्वाणनिषेधरूपः, स एव कान्तारम्, तद्भञ्जने वारण ! गज !, अत एव समान ! श्रीसिद्धराजपर्षदि प्राप्तसत्कार!—जय त्वम् । धर्मार्थिक ! वादजयतुष्टनृपतेः स्वापतेयप्राप्तावपि निरीहत्वात् धर्ममेव अर्थयते । अमद ! राजपूज्यत्वेऽपि निरहंकार !, महः तेजः, दया कृपा, समाहारत्वाद् महोदयम्, तद् विशेषेण ईर्ते गच्छति, कृपा–तेजसी युगपदेकत्राऽसंभविनी अपि त्वयि अवस्थिते, अतस्त्वं लोकोत्तरोऽसि—इति ध्वन्यते । धीर ! अक्षोभ्य !, सोमसकीर्ते !, परम ! प्रकृष्ट !, आगमसिद्ध ! युगप्रधानागम ! ॥ ९२ ॥

कल्याण ! सार ! सवितानहरे-क्ष ! मोहकान्तारवारण ! समान ! जयाऽऽद्यदेव ! ।
धर्मा-ऽर्थ-कामद ! महोदयवीरधीर ! सोम ! प्रभावपरमाऽऽगमसिद्धसूरे ! ॥

अथ श्रीहेमाचार्यः । हे कल्याण ! मिथ्यात्वविषघातनाद्यष्टगुणोत्कृष्टत्वेन हेम !, सोम ! सकललोकलोचनचकोरचक्रलीढकान्तितया चन्द्र !, सूरे ! आचार्य !, ततः श्रीहेमचन्द्रसूरे,! इत्यर्थः । सार ! सर्वश्रेष्ठ ! । सवो यज्ञः, स विद्यते येषां ते सविनो याज्ञिकाः, तेषां तानः पशुवित्रासनस्य यज्ञविस्तारः, तं हरति प्रवर्तितसर्वसत्त्वाऽभयदानपटहत्वात् । ईक्ष ! समस्तशास्त्रार्थरहस्यवीक्षक ! । मोहो यथार्थवस्तुनि संशय–विपर्यासरूपमज्ञानम्, तदेव काननम्, तद्भञ्जने वारण ! कुञ्जर ! ।

तथाहि—

क्लृप्तं व्याकरणं नवं विरचितं छन्दो नवं द्व्याश्रया-
ऽलंकारौ प्रथितौ नवौ प्रकटितौ श्रीयोगशास्त्रं नवम् ।
तर्कः संजनितो नवो जिनवरादीनां चरित्रं नवं
बद्धं येन न केन विधिना मोहः कृतो दूरतः ॥

समान ! समस्तराजाऽमात्यादिलोकैः कनककमलकलशचरणपूज ! जय त्वम् । आद्या मुख्याः, देवा वीतरागा यस्मात्, स्थाने स्थाने जिनायतनानां तेन कारितत्वात् । धर्मा–ऽर्थ–कामद ! भक्तानां तत्कालमेव त्रिवर्गप्राप्तेः । महान् करि–तुरग–रथ–पदातिप्राचुर्येण गुरुः, उदयः साम्राज्यं यस्य, स चासौ वीरः—चतुर्दिगन्तनृपतीनाम्—अर्णोराजादीनां पराजये शूरः—अर्थात् चक्रवर्ति-श्रीकुमारपालदेवः, तस्य धियं [ अपत्यरहिता स्त्री निर्वीरा उच्छिन्नवंशा ] निर्वीराधनमुक्ति–मद्य–मृगया–द्यूतादिव्यसनवारण–सर्वसत्त्वाऽभयदान–सर्वस्थानजिनभवनप्रधानां धर्मबुद्धिं राति । प्रभाव-परम ! प्रभावः सकलपरतीर्थिकावर्जनमाहात्म्यम्, तेन प्रकृष्ट ! सैद्धान्तिकशिरोमणे ! ॥ ९३ ॥

कल्याणसार! सवितान! हरे-ऽक्षमोह! कान्ताऽऽरवारण! समान! जयाद्य! देव!।
धर्मार्थकामद! महोदय! वीर! धीर! सोमप्रभाऽत्र पर-मागम! सिद्धसूरे!॥

अथ श्रीविक्रमतुलितनरसिंहदेवः श्रीजयसिंहदेवः। हे हरे! अरिकरिशिरःकपाटपाटनपटुतया सिंह!, जयाद्य! जयशब्दपूर्व-जयसिंह!, दिव्यरूपरम्यतया देव!, कल्याणसार! सुवर्णसिद्धिप्रधान!, सवितान! वयः कुक्कुटाः पक्षिणः-तेषां तानो विस्तारस्तेन सह वर्तते-युद्धार्थं कुक्कुटान् दधौ इत्यर्थः।

यदुक्तं श्रीकविराजेन—

रे भूपाः! कविराज एष भवतो जल्पत्युदस्तभुजः
पूज्या वश्चरणायुधा परममी युष्मत्कुले देवताः।
यद्युद्धोत्सवदर्शनैकरसिकः श्रीताम्रचूडध्वजो
देवः पश्यत नाधुना परि''' यत्येकातपत्रां महीम्॥

अक्षैः पाशकैर्मोहयति द्यूतक्रीडापरान् पराजयते इत्यर्थः-दुर्योधद्यूतवैशद्येन सकलकलाकुशल इति लक्ष्ये। कान्तं कमनीयम्, आरम्-अरिसमूहः, तद्वारण! साहंकारधाराधिपयशोवर्माधरिसमूहं गुप्तिक्षिप्तं निर्गच्छन्तं निवारयतीत्यर्थः। त्रिवर्गप्रद!। महस्य रसोत्सवलक्षणस्य उदय-उन्नतिर्यस्मात्, अद्यापि तत्प्रवर्तितस्य कनकदानप्रधानस्य रसोत्सवस्य प्रवर्तमानत्वात्। वीर! एकाङ्गवीर!। धीर! साहसिकप्रकाण्ड! दर्पान्धबर्बरकजिष्णु अवन्तिनाथ इत्यूर्जितैर्जयति नामभिरेव देवः।

यदुवाच श्रीकविराजः—

एकाङ्गवीरतिलको भुवनैकमल्लः सिद्धाधिपः परमसाहसिकप्रकाण्डः।
दर्पान्धबर्बरकजिष्णुरवन्तिनाथ इत्यूर्जितैर्जयति नामभिरेव देवः॥

सोमप्रभः सोमवंशाऽऽद्यपुरुषः, तस्येव प्रभा यस्य। अत्र रक्ष जगत्-इति गम्यम्। परेषां शत्रूणां मां लक्ष्मीमागमयति वैरि-रिपुराजश्रियमानीतवान् इत्यर्थः। सिद्ध-साधितविविधसिद्धितया सिद्धराज!॥ ९४॥

कल्याणसार! सवितानहरे-क्ष! मोहकान्ताऽऽरवारण! समानऽजयाऽऽद्य! देव!।
धर्मार्थ! कामदमहो-दय! वीर! धीर! सोमप्रभाऽत्र परमागमसिद्धसूरे!॥

अथ श्रीकुमारपालः। हे सवितानहर! ससंतानः हरः शंकरो यस्मात् स सवितानहरः कुमारः, कुमारेणैव हरस्य ससंतानत्वात्, ततः कुमारदेव!-देवशब्दस्य नृपपर्यायत्वात् कुमारनृपते!। अजयः अजयदेवः क्ष्मापतिः, तस्य आद्य! प्रथम!। अत्र रक्ष, कान्? सर्वान् "सम-सिमौ सर्वार्थौ" इति पाठात्। कल्याणानि जिनानां च्यवन-जन्म-दीक्षा-निर्वाणदिनोत्सवाः, तेषु पूजादिनिमित्तवित्तव्ययकरणेन श्रेष्ठ!।

यदवोचाम—

चौलुक्येन्द्रेण चैत्ये कुचकलशभरैर्वन्धुराः सिन्धुरस्त्री-
स्कन्धारूढा विधातुं जिनजननमहे सूतिकर्मप्रपञ्चम्।

षट्पञ्चाशत् समीरप्रमुखनिजनिजाचारचातुर्यवर्याः
स्फूर्जन्माणिक्यहेमाभरणकवचिताश्चक्रिरे दिक्कुमार्यः ॥
द्वात्रिंशत्त्रिदशाधिपा नृपगृहाच्चैत्ये द्विपाध्यासिताः
कल्याणाभरणाभिरामवपुषः कल्याणकाद्युत्सवे ।
स्नात्रं कर्तुममर्त्यशैलशिरसि स्वर्गादिवाऽभ्याययु-
स्तन्मध्ये च कुमारपालनृपतिर्भेजेऽच्युतेन्द्रश्रियम् ॥

ईश ! यथावस्थितदेव-गुरु-धर्मतत्त्ववीक्षक ! । मोहाय विपर्यासाय यः कान्तासु स्त्रीषु, आरः अभिगमः, तस्य वारण ! निषेधक !—प्रतिवर्षं वर्षाकालमासचतुष्टयम्, शेषकालेऽपि अष्टमी-चतुर्दश्यादिपर्वसु त्रिविधं त्रिविधेन ब्रह्मचर्यं चकार इत्यर्थः । धर्महेतो ! द्यूताद्यधर्मनिषेधेन सर्वत्र प्रासादान् कृतवान् इत्यर्थः । वाञ्छितमदं महत्तेजो, दया च यस्य-तेजसो दुष्टानुत्थानात्, कृपया सर्वसत्त्वरक्षणाद् जगतोऽपि वाञ्छितार्थान् व्यधाद् इत्यर्थः । वीर ! चतुर्दिगन्तपरिवृढपराजयैकशूर ! । धीर ! साहसिकचूडामणे ! । उमया सहिता सोमा सोमा सकीर्तिः प्रभा यस्य । स्व-परसिद्धान्ताधिगमसिद्धसूरिः श्रीहेमचन्द्र-नामा धर्माचार्यो यस्य ॥ ९५ ॥

कल्याऽऽणसारसवितानहरे-क्षमोह ! कान्तारवा ! रणसमानऽजयाद्य ! देव ! ।
धर्मार्थ ! कामद ! महोदयवीरधीर ! सोमप्रभाऽव परमा गमसिद्धसूरे ! ॥

श्रीअजयदेवः । हे देव ! अजयाद्य ! अजयः 'अजय' इति शब्दो आद्यो यस्य ततः-अजयदेव ! । कलिः करि-मल्ला-ऽङ्क-युद्धम्, तस्य आण. कोलाहलः, तेन सारः श्रेष्ठः, सवितानः सविस्तारः, हरः शंकरो यस्मात्-परमार्हतश्रीकुमारपालदेवप्रतिषिद्धं पृथिव्यां शिवधर्मं प्रवर्तितवान् इत्यर्थः । ईक्षो दर्शनम्, तस्माद् मोहो रागो यस्य-यां यां राजकन्यां ददर्श तां तां पर्यणैषीद् इत्यर्थः । कान्त ! कमनीय ! । आरवाः ! आरम्-अरिसमूहं वारयति क्विप्, णिलोपः । रणो युद्धं तत्र समानः सदर्पः, तमाचष्टे णिच्, क्विप्, णिलोप-यो यो युद्धाभिमानी भटस्तं तं सप्रसादमवादीद् इत्यर्थः । धर्मस्य अहिंसादेरर्थो निवृत्तिर्यस्मात्-अहिंसां निषेध्य पापर्धिप्रवर्तनेन हिंसां चकार इत्यर्थः । प्रणतप्रार्थितार्थप्रद ! । महोदया अभ्युदयवन्तो ये वीराः शाकम्भरीभूप-सोमेश्वरप्रभृतयो विक्रान्ताः, तेषां धियं ईरयति कम्पयति-स्वस्थानस्याऽप्यऽस्य काञ्चनमण्डपिकादिप्रेषणात् तैः । सकीर्तिकान्ते ! । अव रक्ष । काः ? परमाः परेषा लक्ष्मीः । "सर्वे गत्यर्था ज्ञानार्थाः" इति गमो ज्ञानं तेन सिद्धा 'ज्ञानवन्त' इति ख्यातिं गताः, सूरयः पण्डिता यस्मात् ॥ ९६ ॥

कल्याणसार! सवितानहरे! क्षमोह! कान्ताऽऽरवारण! समानऽजयाद्य! देव! ।
धर्मार्थकामद! महोदय! वीर! धीर! सोमप्रभाव! परमाऽऽगमसिद्धसूरे! ॥

अथ मूलराजः । हे आद्यदेव ! आद्यशब्दो मूलपर्यायः, देवशब्दो राजपर्यायश्च इति मूलराज ! । अजय! न जीयते इत्यजयः, यदि वा अजयाद्य ! अजयदेवक्ष्मापतिः आद्यपितृत्वेन प्रथमो यस्य । देव ! राजन् ! अव रक्ष । कान् ? समान् अविषमान् साधून् इत्यर्थः । कल्याणसार ! मङ्गल-

श्रेष्ठ ! । सविताना विस्तारवन्तो हयस्तुरंगा यस्य । क्षमां पृथ्वीं स्वकीयां पालयितुम्, परकीयां महीतुम्–ऊहते वितर्कयति । कान्ताऽऽराः–चारुचङ्क्रमणाः वारणाः करिणो यस्य । त्रिवर्गपालक ! । महान् उदयो यस्य । वीर ! विक्रान्त ! । धीर ! साहसिक ! । प्रत्यहं कलोपचीयमानतया सोमस्य इव चन्द्रस्य इव प्रभावो यस्य । परेषां शत्रूणां मा लक्ष्मीः, तस्या आगमे व्यपगमे च सिद्धसूरे ! मन्त्रसिद्धाचार्य ! ॥ १७ ॥

कल्याऽऽणसाऽरसवितानहरे-क्षमोह ! कान्तारवाऽरण ! समान ! जयाऽद्य देव ! ।
धर्मार्थिकामद ! महोदयवीर ! धीर ! सोम ! प्रभाव ! परमाऽऽगम ! सिद्ध ! सूरे ! ॥

सिद्धराजश्रीजयसिंहदेवस्य, परमार्हतश्रीकुमारपालस्य, श्रीमूलराजस्य च कलितसकलशास्त्रोपनिषदि पर्षदि प्राप्तप्रसिद्धिः कविराजश्रीपालकीर्तिलतालवालः श्रीसिद्धपालः ।

हे सिद्ध ! सिद्धपाल ! "भीमो भीमसेन." इति न्यायात् । "कल्याणः कल्याणवाचि स्या" इति पाठान् कल्या कल्याणी वाक् संस्कृतादिषड्भाषानुगतकाव्यरूपा इत्यर्थः । तस्या आणो भणनम्, स एव श्रीर्यस्य । अत एव अरसा नीरसा ये कवयस्तेषां वितानमवसरः, तत् हरति–कल्याणीवाचं वितन्वति सति सिद्धपालनृपसदसि नीरसानामन्येषां कवीनां नावसर इत्यर्थः । क्षमा लक्ष्मीसंपादनसमर्था ऊहा वितर्का यस्य–न केवलं कविः, किंतर्हि ? लक्ष्मीसंपादकव्यापारचिन्ताचतुरोऽपीत्यर्थः । कान्तः कमनीयः, आरवः शब्दो यस्य । अरण ! अकलह ! आत्मप्रशंसा–परनिन्दादिदोष–रहितत्वात् । समान ! सकललोकपूज्य ! । जय त्वम् । अद्य । देव ! ज्ञातसर्वव्यवहार ! । त्रिवर्गपालक ! । महोदयं विशेषेण ईर्ते गच्छति । धीर ! धिया बुद्धया राजते, धियं वा ददाति । सोम ! सकीर्ते ! । प्रभाव ! प्रकृष्टाभिप्राय ! । परः प्रकृष्टः, माऽऽगमः लक्ष्मीसमागतिर्यस्य । सूरे ! सकलशास्त्रविशारद ! । अनेन विशेषणद्वयेन सिद्धपालस्य लोकोत्तरत्वमुक्तम् । सहवास-विरुद्धयोरपि लक्ष्मी–ब्राह्मयोरस्मिन् दर्शनात् ॥ १८ ॥

कल्याणसार ! स वितानहरे ! क्षमोह ! कान्ताऽऽरवारण ! समान ! जयाऽद्य देव ! ।
धर्मार्थकामऽदमहोदय ! वीरधीर ! सोमप्रभाव ! परमागमसिद्ध ! सूरे ! ॥

अथ श्रीअजितदेवसूरिः ।

यः शास्त्रतर्कसुगताऽऽगमकाव्यतर्क–संपर्ककर्कशमतिप्रसरैः प्रबुद्धैः ।
भावारिभिः स्मरमदप्रमुखैर्बुभुक्षा–मुख्यैः परीषहगणैश्च न जीयते स्म ॥

सोऽर्थाद् अजितः, स चासौ मनोहराकारतया देवश्च । सूरे ! आचार्य ! अजितदेवसूरे ! इत्यर्थः । कनककमलवत् कपिशकान्ते ! । क्षमः प्रतिवादिविद्यामदच्छेदे समर्थः ऊहस्तर्को यस्य । कान्तः कमनीयः, आरश्चङ्क्रमणं तेन वारण इव गज इव–सलिलगमन इत्यर्थः । समान ! सकललोकपूज्य ! । धर्ममेव अर्थं वस्तु कायति विच्–धर्मार्थकास्तं धर्मार्थकाम् । अव रक्ष रागाद्यन्तरङ्ग-रिपुध्वंसनेन । अदमहोदय । अदमः अनुपशमः, तं हन्ति अदमहा उदयो यस्य । वीरधीर ! अवनम् ऊः सर्वरक्षा, तस्याम् ईरधीर्गमनबुद्धिः, तां राति ददाति । सोमप्रभाव ! आल्हादक ! । परमागम-सिद्ध ! जिनसिद्धान्तेन ख्यात ! ॥ १९ ॥

कल्याऽऽणसारस ! वितान ! हरे ! क्षमोह ! कान्ताऽऽरवारण ! समान ! जयाद्य ! देव !
धर्मार्थे ! कामद ! महोदयवीर ! धीर ! सोम ! प्रभावपरमाऽऽगमसिद्धसूरे ! ॥

अथ श्रीविजयसिंहसूरिः । हे हरे ! सिंह !, जयाद्य ! जयशब्दपूर्व !–जयसिंह ! । सवितान ! वेः विशब्दात् तानो विस्तारः, सह वितानेन वर्तते विजयसिंह इत्यर्थः । सूरे ! आचार्यकल्प ! । कलिकालेऽपि दुष्करक्रियाकलापकरणसज्ज आणः शब्दस्तेन सारस ! जलधर !–गम्भीरया गिरा धर्मदेशना करोति इत्यर्थः । क्षमा कान्तिम्, ऊहते–महापराधेऽपि न कुप्यतीत्यर्थः । कान्तासु स्त्रीषु आरोऽभिगमः, तं वारयति स्वयं निरुपमब्रह्मचर्यपरः परेभ्यो ब्रह्मचर्यमुपदिशतीत्यर्थः । समान ! समस्तजनजनितपूज ! । 'देव' इति क्रिया–अस्पृष्टापवादभूमितया देववदाचर । धर्मार्थे ! धर्महेतो ! । कामद ! स्मरखण्डक ! । ( महोदयवीर ! ) मोक्षगमनप्रगल्भ ! । सोम ! चारित्रिषु प्रथमप्रथितकीर्ते ! । प्रभावः–परैरनभिभवनीयोऽनुभवस्तेन परम ! प्रकृष्ट ! । स्व–पराऽऽगमप्रख्यात ! १००

इत्थमर्थशतं श्रुत्वा समुल्लसितगतिप्रकर्षः कोऽपि शिष्यः शतार्थवृत्तस्य कर्तारं स्वगुरुमनेनैव स्तौति–

कल्याऽऽणसारसवितानहरेऽक्षमोहकान्तारवारण ! समान ! जयाऽऽद्य ! देव ! ।
धर्मार्थकाऽमद ! महोद ! यवीर ! धीर ! सोमप्रभाऽऽवपरमाऽऽगमसिद्धसूरे ! ॥

हे सोमप्रभसूरे ! कल्या विवक्षितार्थप्रतिपादनदक्षाः, आणाः शब्दाः, ते एव सारसानि पद्मानि, तेषां वितानो विस्तारस्तत्र हरे ! सूर्य ! । अनेनास्य अनेकार्थशब्दसंदर्भगर्भं शतार्थवृत्तं व्यधात् प्रभुरित्युक्तम् । अक्षो ज्ञानम्, तत्र यो मोहो भ्रान्तिः, स एव कान्तारम्, तद्भञ्जने गजतुल्य ! । अनेन यथार्थावबोधभ्रमनिवृत्तये शतार्थवृत्तस्य वृत्तिं प्रभुश्चकारेत्युक्तम् । जय । त्वम् । आद्य ! एकत्रैव वृत्तेऽर्थशताऽऽविर्भावनेन श्रेष्ठ ! । देव ! चतुर्विंशतिमर्हदादिस्तुतिर्यस्मात् । धर्मार्थक ! धर्मार्थः पुण्यहेतुः क आत्मा यस्य । अमद ! निरहंकार ! । महस्तेजो ददाति सकलसंघस्य तेजःप्रद इत्यर्थः । यवीर ! इः कामः, अवीरः अविक्रान्तो यस्य । धीर ! धियं राति, धिया वा राजते । अवनं आवः सत्त्वरक्षा, तेन प्रकृष्ट ! । आगमेन सिद्धान्तेन सिद्ध ! ॥ १ ॥ × × × × × × × × ×

स एव शिष्यः स्वकृतैः कवित्वै–र्गुरोर्गरिम्णा जितकाञ्चनाद्रेः ।
गृहस्थभावान्वयकीर्तनेन व्यनक्ति भक्तिं पुनरुक्तमेताम् ॥

प्राग्वाटान्वयनीरराशिरजनीजानिर्जिनार्चापरः
संजातो जिनदेव इत्यभिधया चूडामणिर्मन्त्रिणाम् ।
यस्यौदार्य–विवेक–विक्रम–दया–दाक्षिण्यपुण्यैर्गुणैः
साम्यं लब्धुमहर्निशं जगदपि क्लिश्यन् न विश्राम्यति ॥

तस्याऽऽत्मजः सुजनमण्डलमौलिरत्न–
मुज्जृम्भितेन्द्रियजयोऽजनि सर्वदेवः ।
एकस्थसर्वगुणनिर्मितकौतुकेन
धात्रा कृतोऽयमिति यः प्रथितः पृथिव्याम् ॥

सूनुस्तस्य प्रथमकमलादर्पणः पुण्यकामः
कौमारेऽपि स्मरमदजयी जैनदीक्षां प्रपन्नः ।
विश्वस्यापि श्रुतजलनिधेः पारमासाद्य जज्ञे
श्रीमान् सोमप्रभ इति लसत्कीर्तिराचार्यवर्यः ॥
यो गृह्णाति समश्रुतं वहति यस्तर्केऽद्भुतं पाटवं
काव्यं यस्त्वरितं करोति तनुते यः पावनीं देशनाम् ।
योऽबध्नात् सुमतेश्चरित्र × × भ × सूक्तिपङ्क्तिपरां
श्रीसोमप्रभसूरिरेप [ निखिले ] वृत्ते शतार्थं व्यधात् ॥



# ऐतिहासिकनाम्नामनुक्रमः ।

# कुमारपालप्रतिबोध-संक्षेपः।

ग्रन्थकारस्य प्रस्तावना।

चउसु दिसासु पसरियं मोह-बलं निज्जिउं पयट्टो व्व। पृष्ठ १.
पयडिय-धम्म-चउक्को चउ-देहो जयइ जिण-नाहो॥
तं नमह रिसह-नाहं नाण-निहाणस्स जस्स अंसेसु।
अलि-कसिणो केस-भरो रेहइ रुक्खे भुयंगो व॥
तं सरह संतिनाहं पवन्न-चरणं पि जं चरण-लग्गा।
तियस-कय-कणय-पंकय-मिसेण सेवंति नव निहिणो॥
कज्जल-समाण-वन्नं सिवंग-भूयं निसिद्ध-मय-मारं।
परिहरिय-रायमइयं दुहा नमंसामि नेमिजिणं॥
मज्झ पसीयउ पासो पासे जस्सोरगिंद-फण-मणिणो।
दिप्पंति सत्त-दीव व सत्त तत्ताइं पायडिउं॥
सो जयइ महावीरो सरीर-दुग्गाओ भाव-रिउ-वग्गो।
चिरमन्न-पाण-रोहं काउं निव्वासिओ जेण॥
वित्थारिय-परमत्थं अणग्घ-रयणासयं सुवन्न-पयं।
दोगच्च-दलण-निउणं नमह निहाणं व जिण-वयणं॥
जेसिं बुद्धिं लद्धिं व लहिउ मंदो वि अक्खलिय-पएहिं।
विसमे वि कव्व-मग्गे संचरइ जयंतु ते गुरुणो॥
कइणो जयंतु ते जलहिणो व्व उवजीविऊण जाण पयं।
अन्ने वि घणा भुवणे कुणंति वन्नाण उक्करिसं॥
जलहि-जल-गलिय-रयणं व दुलहं माणुसत्तणं लहिउं।
जिणधम्मंमि पयत्तो कायव्वो बुद्धिमंतेण॥ पृष्ठ २.
सग्गो ताण घरंगणं सहयरा सव्वा सुहा संपया
सोहग्गाइ-गुणावली विरयए सव्वंगमालिंगणं।
संसारो न दुरुत्तरो सिव-सुहं पत्तं करंभोरुहे
जे सम्मं जिणधम्म-कम्म-करणे वट्टंति उद्धारया॥
सप्पुरिस-चरित्ताणं सरणेण पयंपणेण सवणेण।
अणुमोयणेण य फुडं जिणधम्मो लहइ उक्करिसं॥
पुव्वं जिणा गणहरा चउदस-दस-पुव्विणो चरिम-तणुणो।
चारित्त-धरा बहवो जाया अन्ने वि सप्पुरिसा॥
तह भरहेसर-सेणिय-संपइनिव-पमिइणो समुप्पन्ना।

पवयण-पभावणा-गुण-निहिणो गिहिणो वि सप्पुरिसा ॥
तेसिं नाम-ग्गहणं पि जणइ जंतूण पुन्न-पब्भारं ।
सग्गाऽपवग्ग-सुह-संपयाउ संपाडइ कमेण ॥
संपइ पुण सप्पुरिसो एक्को सिरि-हेमचंद-मुणि-णाहो ।
फुरियं दूसम-समए वि जस्स लोउत्तरं चरियं ॥
दुइओ य दलिय-रिउ-चक्क-विक्कमो कुमरवाल-भूपालो ।
जेण दढं पडिवन्नो जिण-धम्मो दूसमाए वि ॥
केवल-नाण-पलोइय-तइलोक्काणं जिणाण वयणेहिं ।
पुव्व-निवा पडिबुद्धा जिणधम्मे जं न तं चुज्जं ॥
चुज्जमिणं जं राया कुमारवालो पवुड्ढ-मिच्छत्तो ।
छउमत्थेण वि पहुणा जिणधम्म-परायणो विहिओ ॥
तुलिय-सवणिज्ज-कंती सयवत्त-सवत्त-नयण-रमणिज्जा ।
पल्लविय-लोय-लोयण-हरिस-प्पसरा सरीर-सिरी ॥
आबालत्तणओ वि हु चारित्तं जणिय-जण-चमक्कारं ।
बावीस-परीसह-सहण-दुद्धरं तिव्व-तव-पवरं ॥
मुणिय-विसमत्थ-सत्था निम्मिय-वायरण-पमुह-गंथ-गणा ।
परवाइ-पराजय-जाय-कित्ती मई जय-पसिद्धा ॥
धम्म-पडिवत्ति-जणणं अतुच्छ-मिच्छत्त-मुच्छिआणं पि ।
महु-खीर-पमुह-महुरत्त-निम्मियं धम्म-वागरणं ॥
इच्चाइ-गुणेहिं हेमसूरिणो पेच्छिऊण छेय-जणो ।
सद्दहइ अदिट्ठे वि हु तित्थंकर-गणहर-प्पमुहे ॥ पृष्ठ १.
जिणधम्मे पडिवत्तिं कुमरनरिंदस्स लोइउं लोओ ।
पत्तियइ व्व चिरंतण-भूमिवईणं पि अविअप्पं ॥
सिव-पह-फहगे वि सयं वीरजिणे सेणिएण नरवइणा ।
जीव-दयं कारविउं न सक्किओ कालसोयरिओ ॥
दूसम-समए वि हु हेमसूरिणो निसुणिऊण वयणाइं ।
सव्व-जणो जीव-दयं कराविओ कुमरवालेण ॥
तत्तो दुवे-वि एए इमंमि समए असंभव-चरित्ता ।
कय-कयजुया-वयारा जिणधम्म-पभावण-पहाणा ॥
दुण्ह वि इमाण चरियं भणिज्जमाणं मए निसामेह ।
वित्थरइ जेण सुकयं थिरत्तणं होइ जिणधम्मे ॥
जइ वि चरियं इमाणं मणोहरं अत्थि बहुयमन्नं पि ।
तह वि जिणधम्म-पडिबोह-बंधुरं किं पि जंपेमि ॥

बहु-भक्ख-जुयाइ वि रसवईए मज्झाओ किंचि भुंजंतो ।
निय-इच्छा-अणुरूवं पुरिसो किं होइ वयणिज्जो ॥

अणहिल्लपुर पाटकवर्णनम् ।

अत्थि मही-महिलाए मुहं महंतं मयंक-पडिबिम्बं ।
जंबुद्दीव-छलेणं नहलच्छि दट्ठुमुन्नमियं ॥
तुंगो नासा-वंसो व्व सोहए तियस-पव्वओ जत्थ ।
सीया-सीओयाओ दीहा दिट्ठीओ व सहंति ॥
तत्थारोविय-गुण-घणु-निभं नलाडं व भारहं अत्थि ।
जत्थ विरायइ विउलो वेयड्ढो रयय-पट्टो व्व ॥
जं गंग-सिंधु-सरिया-मुत्तिय-सरियाहिसंगयं सहइ ।
तीर-वण-पंति-कुंतल-कलाव-रेहंत-पेरंतं ॥
तत्थत्थि तिलय-तुल्लं अणहिल्लवाडय-पुरं घण-सुवन्नं ।
पेरंत-मुत्तियावलि-समो सहइ जत्थ सिय-सालो ॥
गरुओ गुज्जर-देसो नगरागर-गाम-गोउलाइन्नो ।
सुर-लोय-रिद्धि-मय-विजय-पंडिओ मंडिओ जेण ॥
जम्मि निरंतर-सुर-भवण-पडिम-ण्हवणंबु-पूर-सित्त व्व ।
सहला मणोरह-दुमा धम्मिय-लोयस्स जायंति ॥ पृष्ठ ४.
जत्थ सहंति सुवन्ना कंचण-कलसा य सुर-घर-सिरेसु ।
गयण-भमण-खिन्न-निसण्ण-खयर-तरुणीण पीण-थणा ॥
अब्भंलिह-सुर-मंदिर-सिर-विलसिर-कणय-केयण-भुएहिं ।
नचइ व जत्थ लच्छी सुट्ठाण-निवेस-हरिस-वसा ॥
जत्थ मणि-भवण-भित्तीसु पेच्छिउं अत्तणो वि पडिबिंबं ।
पडिजुवइ-संकिरीओ कुप्पंति पिएसु मुद्धाओ ॥
जम्मि महा-पुरिसाणं घण-दाणं निरुवमं निएऊण ।
अजहत्थ-नामओ लज्जिओ व्व दूरं गओ घणओ ॥
जंसि समच्छरमणा जलासया न उण धम्मिय-समूहा ।
कमलोवकारया सूर-रस्सिणो न उण सप्पुरिसा ॥
जत्थ रमणीण रूवं रमणिज्जं पेच्छिऊण अमरीओ ।
लज्जंतीओ व चिंताइ कह वि निद्दं न पावंति ॥

चौलुक्यवंशीयनृपवर्णनम् ।

तत्थासि मूलराओ राया चोलुक्क-कुल-नह-मयंको ।
जणिया जणाणुकूला मूलेण व जेण नीइ-लया ॥
जस-पुंडरीय-मण्डल-मंडिय-बंभंड-मंडवो तत्तो ।
खंडिय-विपक्ख-मुंडो चंडो चामुंडराय-निवो ॥
तत्तो वल्लहराओ राया रइवल्लहो व्व रमणिज्जो ।

जेण तुरएहिँ जगझंपणु त्ति कित्ती जए पत्ता ॥
तत्तो दुल्लहराओ राया समरंगणंमि जस्स करे ।
करवालो छज्जइ जय-सिरीइ मयणाहि-तिलओ व्व ॥
तत्तो भीमनरिंदो भीमो व्व पयंड-बाहु-बल-भीमो ।
अरि-चक्कं अक्कमिउं पायडिओ जेण पंडु-जसो ॥
तो कण्णदेव-निवई असासि-जलंमि विलसिया सुइरं ।
जस-रायहंस-सहिया जय-लच्छी रायहंसी व्व ॥
तयणु जयसिंहदेवो पयंड-भुय-दंड-मंडवे जस्स ।
कित्ति-पयाव-मिसेणं चिर-कालं कीलियं मिहुणं ॥
तम्मि गए सुर-लोयं काउं व सुरेसरेण सह मित्तिं ।
कमल-वणं व दिणिंदे अत्थमिए मउलियं भुवणं ॥ पृष्ठ ५.
तत्तो पहाण-पुरिसा निय-मइ-माहप्प-विजिय-सुर-गुरुणो ।
रज्जमणाहं दट्ठुं जंपंति परुप्परं एवं ॥

कुमारपालवंश-वर्णनम् ।

आसि सिरि-भीमदेवस्स नंदणो जणिय-जण-मणाणंदो ।
कय-सयल-खोणि-खेमो नामेणं खेमराउ त्ति ॥
तस्स तणओ तिणीकय-कंदप्पो देह-सुंदरत्तेण ।
देवप्पसाय-नामो देव-पसायण-पहाण-मणो ॥
तस्संगरुहो गरुओ पर-रमणि-परंमुहो महासूरो ।
तियस-सरि-सरिस-कित्ती तिहुयणपालो त्ति नामेण ॥
तस्स सुओ तेयस्सी पसन्न-वयणो सुरिंद-सम-रूवो ।
देव-गुरु-पूयण-परो परोवयारुज्जओ धीरो ॥
दक्खो दक्खिन्न-निही नयवंतो सव्व-सत्त-संजुत्तो ।
सूरो चाई पडिवन्न-वच्छलो कुमरवालो त्ति ॥
एसो जुग्गो रज्जस्स रज्जलक्खण-सणाह-सव्वंगो ।
ता झत्ति ठविज्जउ निग्गुणेहिँ पज्जत्तमन्नेहिँ ॥
एवं परुप्परं मंतिऊण तह गिण्हिऊण संवायं ।
सामुद्दिय-मोहुत्तिय-साउणिय-नेमित्तिय-नराणं ॥
रज्जंमि परिट्ठविओ कुमारवालो पहाण-पुरिसेहिँ ।
तत्तो भुवणमसेसं परिओस-परं व संजायं ॥
तुट्ट-हार-संतुरिय-वरंगण नच्चिय-चारु-विलास-पणंगण ।
निब्भर-सद्द-भरिय-भुवणंतर वज्जिय-मंगल-तूर-निरंतर ॥
साहिय-दिसा-चक्को चउ-व्विहोवाय-धरिय-चउ-वग्गो ।
चउ-वग्ग-सेवण-परो कुमर-नरिंदो कुणइ रज्जं ॥

कुमारपालस्य धर्मस्वरूप-जिज्ञासा।

अह अन्नया वियड्ढे बहुणो बहु-धम्म-सत्थ-नाणड्ढे।
विप्पपहाणे हक्कारिऊण रन्ना भणियमेवं॥
करि-तुरय-रह-समिद्धं नरिंद-सिरि-कुसुम-लीढ-पयवीढं।
लंघिय-वसण-सहस्सो संपत्तो जं अहं रज्जं॥
तं पुव्व-भवे धम्मो सुहेक्क-हेऊ कओ मए को वि।
कज्जस्स दंसणाओ जाणंति हि कारणं निउणा॥ पृष्ठ ६.
ता धम्मस्स सरूवं कहेहि परिभाविऊण सत्थत्थं।
जेण तमायरिऊणं करेमि मणुयत्तणं सहलं॥
मणुयत्तणे वि लद्धे कुणंति धम्मं न जे विमूढ-मणा।
ते रोहणं पि पत्ता महग्घ-रयणं न गिण्हंति॥
तो वुड्ढ-बंभणेहिं निवस्स वेयाइ-सत्थ-पन्नत्तो।
पसु-वह-पहाण-जागाइ-लक्खणो अक्खिओ धम्मो॥
तं सोऊण निवेणं फुरिय-विवेएण चिंतियं चित्ते।
अहह दिय-पुंगवेहिं न सोहणो साहिओ धम्मो॥
पंचिंदिय-जीव-वहो निक्करुण-मणेहिं कीरए जत्थ।
जइ सो वि होज्ज धम्मो नत्थि अहम्मो तओ को वि॥
ता धम्मस्स सरूवं जहट्ठियं किं इमे न जाणंति?।
किं वा जाणंता वि हु मं विप्पा विप्पयारंति॥

वाग्भटदेवेन कुमारपालस्य हेमचन्द्रसूरिपरिचयोत्पादनम्।

इय चिंताए निद्दं अलहंतो निसि-भरम्मि नरनाहो।
नमिऊण अमच्चेणं बाहडदेवेण विन्नत्तो॥
धम्माधम्म-सरूवं नरिंद! जइ जाणिउं तुमं महसि।
खणमेक्कमेगचित्तो निसुणसु जं किं पि जंपेमि॥

हेमचन्द्रस्य गुरुपरम्परावर्णनम्।

आसि भम-रहिओ पुन्नतल्ल-गुरु-गच्छ-दुम-कुसुम-गुच्छो।
समय-मयरंद-सारो सिरिदत्तगुरू सुरहि-सालो॥
सो विहिणा विहरंतो गामागर-नगर-भूसियं वसुहं।
वागड-विसय-वयंसे रयणपुरे पुर-वरे पत्तो॥
तत्थ निवो जसभद्दो भद्द-गयंदो व्व दाण-लद्ध-जसो।
वेरि-करि-दलण-सूरो उन्नय-वंसो विसाल-करो॥
तम्मि नरिंद-मंदिर-अदूर-देसम्मि गिण्हिउं वसहिं।
चंदो व्व तारय-जुओ मुणि-परियरिओ ठिओ एसो॥
तस्स सुहा-रस-सारणि-सहोयरं धम्म-देसणं सोउं।
संवेग-वासिय-मणा के वि पवज्जंति पव्वज्जं॥
अन्ने गिहत्थ-धम्मोचिआइं बारस-वयाइं गिण्हंति।

पृष्ठ ७

मोक्ख-तरु-बीय-भूयं सम्मत्तं आयरंति परे ॥
अह अन्नया निसाए सज्झाय-झुणिं मुणीण सोऊण ।
जसभद्द-निवो संवेग-परिगओ चिंतए चित्ते ॥
धन्ना एए मुणिणो काउं जे सव्व-संग-परिहारं ।
पर-लोय-मग्गमेक्कं मुक्क-भवासा पयंपंति ॥
ता एयाण मुणीणं पय-पउम-नमंसणेण अप्पाणं ।
परिगलिय-पाव-पंकं पहाय-समए करिस्सामि ॥
एवं धम्म-मणोरह-कलिय-मणो पत्थिवो लहइ निद्दं ।
मंगल-तूर-रवेणं पडिबुद्धो पच्छिमे जामे ॥
कय-सयल-गोस-किच्चो समत्त-सामंत-मंति-परियरिओ ।
करि-तुरय-रह-समेओ पत्तो सिरिदत्त-गुरु-पासे ॥
भूमि-निहित्तुत्तमंगो भत्ति-समग्गो गुरुं पणमिऊण ।
पुरओ निवो निविट्ठो कयंजली भणिउमाढत्तो ॥
भयवं ! धन्ना तुब्भे संसारासारयं मणे धरिउं ।
जे चत्त सव्व-संगा पर-लोयाराहणं कुणह ॥
अम्हारिसा अहन्ना परलोय-परंमुहा महारंभा ।
अनियत्त-विसय-तण्हा जे इह-भव-मेत्त-पडिबद्धा ॥
अह जंपिउं पवत्तो सिरिदत्तगुरू नहंगणं सयलं ।
धव-सिरि-मुत्ता-पंतीहिं दंत-कंतीहिं धवलंतो ॥
मुह-ससि-पवेस-सुविणोवमाइ दुलहं नरत्तणं लहिउं ।
खणमेक्कं पि पमाओ बुहेण धम्मे न कायव्वो ॥

( मूलदेवकथानकमत्रानुसन्धेयम् । )

पृष्ठ १६.

इय धम्म-देसणाऽमय-रसेण सेत्तम्मि भूमिणाहस्स ।
हिययम्मि समुल्लसिओ जिणिंद-धम्माणुराय-दुमो ॥
भणियं निवेण भयवं ! कहियमिणं उभय-भव-हियं तुमए ।
अन्नो पिओ वि सव्वो जंपइ इह-भव-हियं चेव ॥
ता समयम्मि विमुत्तुं तणं व रज्जं विवेय-गिरि-वज्जं ।
पडिवज्जिऊण धम्मं सहलं काहं मणुय-जम्मं ॥
ता वंदिउं मुणिंदं निय-मंदिरमागओ महीनाहो ।
धम्मोवएस-विसरं सुमरंतो गमइ दियहाइं ॥
अह पावसो पयट्टो संपाडिय-पहिय-हियय-संघट्टो ।
समरट्ट-मारनट्टो कयंब-संदट्ठ-अलिवट्टो ॥
जत्थ विरहग्गि-डज्झंत-विरहिणी-हियय-लद्ध-पसरेण ।

धूम-भरेण घण-मंडलेण मलिणी-कयं गगणं ॥
नव-मेह-पिययमेणं समप्पियं जत्थ तडि-लया-लोयं ।
कणयमयाभरणं पिव पयडंति दिसा-पुरंधीओ ॥
नव-पाउस-नरवइ-रज्ज-घोसणा-डिंडिमो व्व सव्वत्थ ।
जगविय-विसम-वाणो वियंभिओ मेह-गज्जिरवो ॥ पृष्ठ १७.
निवडंति माणिणी-माण-खंडणे विलसमाण-सत्तीओ ।
जस्सिं जल धाराओ अणंग-सर-धोरणीउ व्व ॥
तस्सिं घरि-खित्तेसुं नरवइणा वावियाइं धन्नाइं ।
तेसिं दंसण-हेउं कयावि राया विणिक्खंतो ॥
तम्मि समए करिसगेहिं धन्न-मज्झाओ पुव्वमुक्खणिउं ।
पुंजी-कएसु निप्फल-तणेसु पज्जालिओ जलणो ॥
तत्थ जलणेण डज्झंत-विग्गहं गब्भ-निब्भरं भुयगिं ।
दट्ठुं संविग्गेणं रन्ना परिभावियं एयं ॥
अहह इमो घरवासो परिहरणिज्जो विवेयवंताणं ।
बहु-जीव-विणास-करा आरंभा जत्थ कीरंति ॥
× × × × × पृष्ठ १८.
एवं संविग्ग-मणो राया निय-मंदिरम्मि संपत्तो ।
हक्कारिऊण पुच्छइ एगंते सावयं एगं ॥
संपइ सिरि-दत्तगुरू गुणवंतो कत्थ विहरइ पएसे ।
सो कहइ डिंडुयाणय-पुरम्मि मुणिपुंगवो अत्थि ॥
तो राया रयणीए कस्स वि अनिवेइऊण निक्खंतो ।
तुरयंमि समारुहिऊण डिंडुयाणय-पुरे पत्तो ॥
सिरि-दत्तगुरुं नमिऊण तस्स कहिऊण नियय-वुत्तंतं ।
जंपइ संपइ काउं अणुग्गहं देहि मह दिक्खं ॥
गुरुणा वुत्तं जुत्तं उत्तम-सत्तस्स तुज्झ नर-नाह ! ।
रज्जं तणं व मुत्तुं करेसि जं संजम-गाहणं ॥
नहि संजमाउ अन्नो संसारुच्छेय-कारणं अत्थि ।
नव-जलहरं विणा किं निव्वइ दवानलं को वि ॥
रन्ना मणप्पमुहं एक्कं एकावलिं समप्पेउं ।
जिणधम्म-निम्मल-मणा पयंपिआ सावया एवं ॥
कारवह जिणाययणं इमीए एक्कावलीइ मुल्लेण ।
तेहिं वि तह त्ति पडिवज्जिऊण तं झत्ति कारवियं ॥
तं अत्थि तत्थ अज्ज वि चउवीस-जिणालयं जिणाययणं ।

पुन्नं व मुत्तिमंतं जसभद्द-निवस्स जं सहइ ॥
रन्ना पुण पडिवन्ना सिरि-दत्त-गुरुस्स चलण-मूलम्मि ।
अंतर-रिउ-वह-दक्खा दिक्खा निसियाऽसि-धार व्व ॥
एगंतरोववासे जा जीवं अंबिलं च पारणए ।
काहं ति तेण विहिया वय-गहण-दिणे चिय पइन्ना ॥
सुय-सागर-पारगओ सूरि-पयं पाविऊण जसभद्दो ।
भुवणे चिरं विहरिओ पडिबोहंतो भविय-वग्गं ॥
ससमय-परसमय-विऊ समए तेणावि निय पए ठविओ ।
निज्जिय-पज्जुन्न-भडो पज्जुन्नो नाम वर-सूरि ॥
अह जसभद्दो सूरी तिव्व-तवचरण-सोसिय-सरीरो ।
निय-परिवार-समेओ आरूढो उज्जयंत-गिरिं ॥
रेवयगिरिंद-मउडं व सुकय-लच्छी-विलास-कमलं व ।
भव-जलहि-जाणवत्तं व जिण-हरं गणहरो पत्तो ॥
नमिऊण नेमिनाहं पमज्जिउं निवसिऊण तस्स पुरो ।
पज्जुन्नसूरि-पमुहं निय-परिवारं भणइ एवं ॥
राग-दोस-विमुक्को चिर-सेविय-नाण-दंसण-चरित्तो ।
निच्छय-नएण तित्थं अप्प चिय वुच्चए जइ वि ॥
तह वि हु ववहार-नयेण जो पएसो पणट्ठ-पावाण ।
तित्थंकराण पएहिं फरिसिओ सो परं तित्थं ॥
इह दिक्खा-पडिवत्ती नाणुप्पत्ती विमुत्ति-संपत्ती ।
नेमिस्स जेण जाया तेणेसो तित्थमुज्जितो ॥
अन्नत्थ वि मेल्लिस्सं निस्संदेहं दुहावहं देहं ।
तत्तो वरं पसत्थे तित्थे इत्थे वि मेल्लेमि ॥
इय भणियं पच्चक्खइ जिण-पच्चक्खं चउव्विहाहारं ।
वारंतस्स वि पज्जुन्नसूरिणो सपरिवारस्स ॥
पउमासणोवविट्ठो परिचत्त-समत्त-गत्त परिकम्मो ।
सिरि-नेमिनाह-पडिमा-मुहपंकय-निहिय-नयण-जुओ ॥
सव्वत्थ वि राग-दोस-वज्जिओ परम-तत्त-लीण-मणो ।
मुणिपुंगव-मुणियागम-सवण-समुल्लसिय-संवेगो ॥
पुव्व-महारिसि-सरिसो दूसम-समये वि सेविओ सम्मं ।
तेरस-दिणावसाणे पत्तो तियसालयं सूरी ॥
तत्तो पज्जुन्नगुरू वियरंतो सयल-संघ-परिओ स ।
सुत्तत्थ-पयडण-परो परोवयारं चिरं कुणइ ॥

पृष्ठ ११.

सत्त-सुहो सुइ-सुहओ वाइज्जंतो समग्ग-लोएण ।
ठाणय-पगरण-रूवो जस्सऽज्ज वि फुरइ जस-पडहो ॥
तस्स गुणसेणसूरी सीसो वर-संजमुज्जओ जाओ ।
जस्स गुणच्चिय बाणा अंतररिउ-वग्ग-निग्गहणे ॥
सीसो खम-मग्ग-लग्गो तस्सासी देवचंदसूरि त्ति ।
चंदेण व दिय-राएण जेण आणंदियं भुवणं ॥
कय-सुकय-कुमुय-सोहा चउर-चओर-प्पमोय-संजणणी ।
संतिजिण-चरित्त-कहा जुण्ह व्व वियंभिआ जत्तो ॥
जे ठाणएसु ठविया पज्जुन्न-मुणीसरेण धम्म-दुमा ।
काऊण ताण विवइं ते जेण लहाविआ वुड्ढिं ॥
जस्स चलणारविंदं चरित्त-लच्छी-विलास-वासहरं ।
मुणि-भमरेहिँ अमुक्कं जिणमय-मयरंद-लुद्धेहिं ॥
सो विहरंतो मही-मंडलम्मि खंडिय-पयंड-मावरिऊ ।
सयल-भुवणे-क्क-बंधू धंधुक्कयं पुरवरं पत्तो ॥
सो तत्थ पणमण-त्थं समागयाणं जणाण पउराणं ।
संसारा-सारत्तण-पयासणिं देसणं कुणइ ॥
तं सोउं संविग्गो सरीर-सुंदेर-विजिय-सुरकुमरो ।
एक्को वणिय-कुमारो कयंजली भणिउमाढत्तो ॥
भयवं ! भवण्णवाओ जम्म-जरा-मरण-लहरि-हीरंतं ।
मं नित्थारसु सुचारित्त-जाणवत्त-पयाणेण ॥
गुरुणा वुत्तं बालय ! किं नामो कस्स वा सुओ तं सि ।
तो तस्स माउलेणं पयंपिअं नेमिनामेण ॥

हेमचन्द्रस्य वृत्तान्तः।

भयवं ! इह-त्थि हत्थि व्व मोढकुल-विंझ-संभवो भद्दो ।
कय-देव-गुरु-जणच्चो चच्चो नामा पहाण-वणी ॥
निम्मल-कुल-संभूया भूरि-गुणाभरण-भूसिय-सरीरा ।
तस्स-त्थि गेहिणी चाहिणि त्ति सा होइ मह बहिणी ॥
जीए विमलं सीलं दट्ठुं लज्जाए चंदमा निच्चं ।
चरम-जलहिम्मि मज्जइ कलंक-पक्खालणत्थं व ॥
ताणं तणओ एसो निरुवम-रूवो पगिट्ठ-मइ-विहवो ।
भुवणु-द्धरण-मणोहर-चिचइओ चंगदेवो त्ति ॥
गब्भा-वयार-समए इमस्स जणणीए सुविणए दिट्ठो ।
निय-गेहे सहयारो समुग्गओ वुड्ढिमणुपत्तो ॥
जा पुप्फ-फला-रंभो तत्तो मुत्तूण मंदिरं मज्झ ।

पृष्ठ २०.

अन्नत्थ महारामे मणाभिरामे इमो पत्तो ॥
छायाए पल्लवेहिं कुसुमेहिं फलेहिं तत्थ पवरेहिं ।
बहुय-जणाणं एसो उवयारं काउमाढत्तो ॥
गब्भगए वि इमम्मि इह देसे नट्ठमसिव-नामं पि ।
तह अणभिन्नो जाओ लोओ दुब्भिक्ख-दुक्खस्स ॥
परचक्क-चरड-चोराइ-विद्दवा दूरमुवगया सव्वे ।
न फुरंति धूय-पमुहा मेह-च्छन्ने वि दिणनाहे ॥
इय तस्स जम्म-दियहे जायाइं दिसा-मुहाइं विमलाइं । पृ॰ २१.
देव-गुरु-वंदणेण धम्मत्थीणं मणाइं व ॥
हरिस-जणणो जणाणं सुयणो व्व समीरणो समुल्लसिओ ।
रय-पसमणं निवडियं गुरूण वयणं व गंधजलं ॥
भवणम्मि कुसुम-वुट्ठी सुसामि-तुट्ठि व्व सेवए आया ।
कव्व-गुणो व्व सहियए फुरिओ गयणंमि तूर-रवो ॥
एसो परिओस-करो बालत्तणओ वि अमय-घडिओ व्व ।
रयणं व कराओ करं संचरिओ सयल-लोयस्स ॥
संपइ इमस्स चित्तं न रमइ अन्नत्थ वज्जिउं धम्मं ।
माणस-सरंमि मुत्तुं हंसस्स व पल्लल-जलेसु ॥
गुरुणा वुत्तं जुत्तं जं कुणइ इमो चरित्त-पडिवत्तिं ।
जेण सो परमत्थो जणणी-दिट्ठस्स सुविणस्स ॥
गहिऊण वयं अवगाहिऊण नीसेस-सत्थ-परमत्थं ।
तित्थकरो व्व एसो जणस्स उवयारओ होही ॥
तत्तो इमस्स जणयं नयं नामेण भणइ तो तुब्भे ।
अह चंगदेवमेयं वय-गहणत्थं विसज्जेइ ॥
सो बहु-सिणेह-जुत्तो बहुं पि भणिओ विसज्जइ न पुत्तं ।
तत्तो पुत्तो वि दढं कयउज्जमो संजम-गहणे ॥
माउलय-अणुमयं गिण्हिऊण ठाणंतरम्मि संचलिओ ।
गुण-गुरुणा सह गुरुणा संपत्तो खंभतित्थम्मि ॥
तत्थ पवन्नो दिक्खं कुणमाणो सयल-संघ-परिओसं ।
सो सोम-मुहो सोमो व्व सोमचंदो त्ति कयनामो ॥
थेवेण वि कालेण काऊण तवं जिणागमुद्दिट्ठं ।
गंभीरस्स वि सुय-सागरस्स पारंगओ एसो ॥
दूसम-समय-असंभव-गुणोह-कलिओ त्ति भाविउं हियए ।
सिरिदेवचंद-गुरुणा एसो गणहर-पए ठविओ ॥

हेम-समच्छवि देहो चंदो व्व जणाण जणिय-आणंदो।
तत्तो इमो पसिद्धो नामेणं हेमचंदो त्ति॥
निचं सहावउ चिय समग्ग-लोओवयार-कय-चित्तो।
सो देवयाइ वुत्तो विहरंतो विविह-देसेसु॥
गुज्जर-विसयं मुत्तुं मा कुणसु विहारमन्न-देसेसु। पृष्ठ २२.
काहिसि परोवयारं जेणित्थ ठिओ तुमं गरुयं॥
तो तीए वयणेणं देसंतर-विहरणाउ विणियत्तो।
चिट्ठइ इहेव एसो पडिबोहंतो भविय-वग्गं॥
बुह-यण-चूडामणिणो भुवण पसिद्धस्स सिद्धरायस्स।
संसय-पएसु सव्वेसु पुच्छणिज्जो इमो जाओ॥
एअस्स देसणं निसुणिऊण मिच्छत्त-मोहिय-मई वि।
जयसिंहो निवो जाओ जिणिंद-धम्माणुरत्त-मणो॥
तत्तो तेणित्थ पुरे राय-विहारो कराविओ रम्मो।
चउ-जिणपडिम-समिद्धो सिद्धविहारो य सिद्धिपुरे॥
जयसिंहदेव-वयणा निम्मियं सिद्धहेम-वागरणं।
नीसेस-सद्द-लक्खण-निहाणमिमिणा मुणिंदेण॥
अमओ-वमेय-वाणी-विसालमेयं अपिच्छमाणस्स।
आसि खणं पि न तित्ती चित्ते जयसिंहदेवस्स॥
तो जइ तुमं पि वंछसि धम्म-सरूवं जहट्ठियं नाउं।
तो मुणिपुंगव-मेयं पुच्छसु होऊण भत्ति-परो॥
इय सम्मं धम्म-सरूव-साहगो साहिओ अमच्चेणं।
तो हेमचंदसूरिं कुमर-नरिंदो नमइ निचं॥

कुमारपालस्य हेमचन्द्रसूरि-पार्श्वे गमनम्। हेमचन्द्रसूरेः कुमारपालं प्रति सद्बोधः।

सम्मं धम्म-सरूवं तस्स समीवंमि पुच्छए राया।
मुणिय-सयलागमत्थो मुणि-नाहो जंपए एवं॥
भव-सिंधु-तरी-तुल्लं महल्ल-कल्लाण-वल्लि-जलकुल्लं।
कय-सयल-सुह-समुदयं जीवदयं चिय मुणसु धम्मं॥
आउं दीहमरोगमंगमसमं रूवं पगिट्ठं वलं,
सोहग्गं तिजगुत्तमं निरुवमो भोगो जसो निम्मलो।
आएसेक्क-परायणो परियणो लच्छी अविच्छेइणी,
होज्जा तस्स भवंतरे कुणइ जो जीवाणुकंपं नरो॥
नरयपुर-सरल-सरणी अवाय-संघाय-वग्घ-वण-धरणी।
नीसेस-दुक्ख-जणणी हिंसा जीवाण सुह-हणणी॥
जो कुणइ परस्स दुहं पावइ तं चेव अणंतगुणं। पृष्ठ २३.

लब्भंति अंबयाइं नहि निंबतरुंमि ववियंमि ॥
जो जीव-वहं काउं करेइ खण-मित्तमत्तणो तित्तिं ।
छेयण-भेयण-पमुहं नरय-दुहं सो चिरं लहइ ॥
जं दोहग्गमुदग्गं जं जण-लोयण-दुहावहं रूवं ।
जं अरस-मूल-खय-खास-सास-कुट्ठाइणो रोगा ॥
जं कण्ण-नास-कर-चलण-कत्तणं जं च जीवियं तुच्छं ।
तं पुव्वारोविय-जीव-दुक्ख-रुक्खस्स फुरइ फलं ॥
जो जीव-दयं जीवो नर-सुर-सिव-सोक्ख-कारणं कुणइ ।
सो गय-पावो पावेइ अमरसीहो व कल्लाणं ॥

( अमरसिंहादिककथानकान्यत्रानुसन्धेयानि )

कुमारपालस्य जीवदयाभिरुचिः ।

इय जीव-दया-रूवं धम्मं सोऊण तुट्ठ-चित्तेण । पृष्ठ ४०.
रन्ना भणियं मुणि-नाह ! साहिओ सोहणो धम्मो ॥
एसो मे अभिरुइओ एसो चित्तंमि मज्झ विणिविट्ठो ।
एसो चिय परमत्थेण वडए जुत्तीहिं न हु सेसो ॥

जओ—

मन्नंति इमं सव्वे जं उत्तम-असण-वसण-पमुहेसु ।
दिन्नेसु उत्तमाइं इमाइं लब्भंति पर-लोए ॥ पृष्ठ ४१.
एवं सुह-दुक्खेसुं कीरंतेसुं परस्स इह लोए ।
ताइं चिय पर-लोए लब्भंति अणंत-गुणियाइं ॥
जो कुणइ नरो हिंसं परस्स जो जणइ जीविय-विणासं ।
विरएइ सोक्ख-विरहं संपाडइ संपया-भंसं ॥
सो एवं कुणमाणो पर-लोए पावए परेहिंतो ।
बहुसो जीविय-नासं सुह-विगमं संपओच्छेयं ॥
जं उप्पइ तं लब्भइ पभूयतरमित्थ नत्थि संदेहो ।
वविएसु कोद्दवेसुं लब्भंति हि कोद्दव चेय ॥
जो उण न हणइ जीवे जो तेसिं जीवियं सुहं विभवं ।
न हणइ तत्तो तस्स वि तं हणइ को वि पर-लोए ॥
ता भद्देण व नूणं कयाणुकंपा मए वि पुव्व-भवे ।
जं लंघिऊण वसणाइं रज्ज-लच्छी इमा लद्धा ॥
ता संपइ जीव-दया जाव जीवं मए विहेयव्वा ।
मंसं न भक्खियव्वं परिहरियव्वा य पारद्धी ॥
जो देवयाण पुरओ कीरइ आरुग्ग-संति-कम्म-कए ।

पसु-महिसाण विणासो निवारियव्वो मए सो वि ॥
जीव-वह-दुक्कएण वि जइ आरुग्गाइ जायए कह वि ।
तत्तो दवानलेणं दुमाण कुसुमोग्गमो होज्जा ॥
जो जन्नेसु पसु-वहो विहिओ सग्गाइ-साहण-निमित्तं ।
दिय-पुंगव ! सेयं चिय विवेइणो तं न कार्हिति ॥
बालो वि मुणइ एवं जं जीव-वहेण लब्भइ न सग्गो ।
किं पन्नग-मुह-कुहराओ होइ पीऊस-रस-वुट्ठी ? ॥
तो गुरुणा वागरियं नरिंद ! तुह धम्म-बंधुरा बुद्धी ।
सव्वुत्तमो विवेगो अणुत्तरं तत्त-दंसित्तं ॥
जं जीव-दया-रम्मे धम्मे कल्लाण-जणण-कय-कम्मे ।
सग्गापवग्ग-पुर-मग्ग-दंसणे तुह मणं लीणं ॥

कुमारपालस्य सर्वग्रामनगरेषु राजादेशप्रेषणेन जीवदया प्रवर्तना ।

तओ रन्ना रायाएस-पेसणेण सव्व-गाम-नगरेसु अमारि-घोसणा-पडह-वायण-पुव्वं पवत्तिया जीव-दया ।

गुरुणा भणिओ राया—महाराय ! दुप्परिचया पायए मंस-गिद्धी । धन्नो तुमं भायणं सकल-कल्लाणाणं जेण कया मंस-निवित्ती ।

राज्ञो मांसपरित्यागः ।

ता सम्मं पालेज्जसु मंस-निवित्तिं नरिंद ! जा-जीवं । पृष्ठ ४२.
सम्मं अपालयंतो कुंदो व दुहं लहइ जीवो ॥

( कुन्दकथानकमत्रानुसन्धेयम् )

जो पुण नियममखंडं पालिज्ज अवज्ज-वज्जणुज्जुत्तो । पृष्ठ ४७.
सो पुरिसो पर-लोए सोक्खमखंडं लहइ नूणं ॥
जो य न करेज्ज नियमं निद्धम्मो जो कयं च भंजिज्जा ।
सो मंस-भोग-गिद्धो नरयाइ-कयत्थणं लहइ ॥

ता महाराय ! जुत्तं तुमए कयं जं सत्तण्हं महा-वसणाणं दुवे पारद्धी मंसं च परिचत्ताणि । सेसाणि वि सव्वाणत्थ-निबंधणाणि परिहरियव्वाणि । तत्थ—

जं कुल-कलंक-मूलं गुरु-लज्जा-सच्च-सोय-पडिकूलं ।
धम्मत्थ-काम-चुक्कं दाण-दया-भोग-परिमुक्कं ॥
पिय-माय-भाय-सुय-भज्ज-मोसणं सोसणं सुह-जलाणं ।
सुगइ-पडिवक्ख-भूयं तं जूयं राय ! परिहरसु ॥
जूय-पसत्तो सत्तो समत्त-वित्तस्स कुणइ विद्धंसं ।
हारिय-असेस-रज्जो इह दिट्ठंतो नलो राया ॥

( द्यूतविषये नलचरितमत्रानुसन्धेयम् )

राज्ञो द्यूतपरित्यागः। राज्येऽपि राजादेशेन तन्निषेधः।

पृष्ठ ७६.

एवं सोऊण भणियं रन्ना—भयवं! न मए अक्खाइ-जूएण कीलामेत्तं पि कायव्वं। गुरुणा वुत्तं—महाराय! जुत्तं तुम्हारिसाणं विणिज्जिय-अक्खाणं अक्ख-जूय-वज्जणं। मंतीहिं विन्नत्तो राया—देव! देवेण ताव सयं परिचत्तं एवं, अन्नो सव्वत्थ रज्जे निवारिज्जउ त्ति। रन्ना वुत्तं—एवं करेह। 'आएसो पमाणं' ति भणंतेहिं तेहिं तहेव कयं। गुरुणा भणियं—सव्वाणत्थनिबंधण परि-हरसु पर-रमणि-सेवणं।

पृष्ठ ७७.

जओ—

कुलु कलंकिउ मलिउ माहप्पु,
मलिणीकय सयण-मुह,
दिन्नु हत्थु नियगुण-कडप्पह,
जगु झंपिओ अवजसिण,
वसण-विहिय सन्निहिय अप्पह।
दूरह वारिउ मइ तिणि ढक्किउ सुगइ-दुवारु।
उभय-भवुब्भड-दुक्ख-करु कामिउ जिण परदारु॥
सरहस-नमिर-नरेसर-चूडा-चुंबिज्जमाण-चलणो वि।
पर-महिलमहिलसंतो पज्जोओ बंधणं पत्तो॥

( पारदार्ये प्रद्योतकथाऽत्रानुसन्धेया )

वेश्या-परदारा-गमन-परित्यागः।

पृष्ठ ८३.

रन्ना वुत्तं—भयवं! मूलाओ च्चिय मए परित्थीओ।
दूरं भयंकरीओ भुयंगमीओ व्व चत्ताओ॥
पर रमणि-पसत्त-मणो पाएण जणो न को वि मह रज्जे।
गुरुणा भणियं—धन्नो सि जो परित्थी-नियत्तो सि॥
कमलाण सरं रयणाण रोहणं तारयाण जहा गयणं।
परदार-निवित्ति-वयं वन्नंति गुणाण तह ठाणं॥

पृष्ठ ८४.

अह गुरुणा वागरियं—वेसा-वसणं नरिंद! मुत्तव्वं।
दविणस्स विणासयरं जं कमलवणस्स तुहिणं व॥
जं नीर-रासि-महणं व कालकूडं जणेइ खयरोगं।
कवलेइ कुलं सयलं जं राहु-मुहं व ससि-बिंबं॥
धूमो व्व चित्त-कम्मं जं गुण-गणमुज्जलं पि मलिणेइ।
जं दोसाण निवासो वम्मिय-विवरं व भुयगाणं॥

वेसा-वसणासत्तो तिवग्ग-मूलं विणासिउं अत्थं ।
पच्छा पच्छायावेण लहइ सोयं असोओ व्व ॥

( अशोककथानकमत्रानुसन्धेयम् )

रन्ना भणियं—भयवं ! वेसासु मणं अहं पि न करिस्सं । पृष्ठ ९२.
गुरुणा भणियं—भवउ उत्तम-पुरिसस्स जुत्तमिणं ॥

संपयं मज्ज-वसण-दोसे सुणसु—

मद्यपानवर्जनम् ।

नच्चइ गायइ पहसइ पणमइ परिभमइ मुयइ वत्थं पि ।
तूसइ रूसइ निक्कारणं पि मइरा-मउम्मत्तो ॥
जणणिं पि पिययमं पिययमं पि जणणिं जणो विभावंतो ।
मइरा-मएण मत्तो गम्मागम्मं न याणेइ ॥
न हु अप्प-पर-विसेसं वियाणए मज्ज-पाण-मूढ-मणो ।
बहु मन्नइ अप्पाणं पहुं पि निब्भत्थए जेण ॥
वयणे पसारिए साणया विवरब्भमेण मुत्तंति ।
पह-पडिय-सवस्स व दुरप्पणो मज्ज-मत्तस्स ॥
धम्मत्थ-काम-विग्घं विहणिय-मइ-कित्ति-कंति-मज्जायं ।
मज्जं सव्वेसिं पि हु भवणं दोसाण किं बहुणा ? ॥
जं जायवा स-सयणा स-परियणा स-विहवा स-नयरा य ।
निहं सुरा-पसत्ता खयं गया तं जए पयडं ॥

( यादवकथानकमत्रानुसन्धेयम् )

एवं नरिंद ! जाओ मज्जाओ जायवाण सव्व-क्खओ । पृष्ठ १०५.
ता रन्ना नियरज्जे मज्जपवित्ती वि पडिसिद्धा ॥
इण्हिं नरिंद ! निसुणसु कहिज्जमाणं मए समासेणं ।
वसणाण सिरो-रयणं व सत्तमं चोरियावसणं ॥
पर-दव्व-हरण-पाव-दुमस्स धण-हरण-मारणाईणि ।
वसणाइं कुसुम-नियरो नारय-दुक्खाइं फलरिद्धी ॥
जग्गंतो सुत्तो वा न लहइ सुक्खं दिणे निसाए वा । पृष्ठ १०६.
संका-छुरियाए छिज्जमाण-हियओ धुवं चोरो ॥
जं चोरियाए दुक्खं वह-बंधण-सूलरोवण-प्पमुहं ।
एत्थ वि लहेइ जीवो तं सव्व-जणस्स पच्चक्खं ॥
दोहग्गमंगच्छेयं पराभवं विभव-भंसमन्नं पि ।
जं पुण परत्थ पावइ पाणी तं केत्तियं कहिमो ॥
हरिऊण परस्स धणं कयाणुतावो समप्पए जइ वि ।
तह वि हु लहेइ दुक्खं जीवो वरुणो व्व परलोए ॥

(वरुणकथानकमत्रानुसन्धेयम्)

चौर्य-मृतधना-पहरणनिषेध. ।

पृष्ठ ११४.

रन्ना भणियं—भयवं ! पुव्व पि मए अदिन्नमन्नधणं ।
न कयावि हु गहियव्वं निय-रज्जे इय कओ नियमो ॥
जो उण कयाइ कस्स वि कयावराहस्स कीरए दंडो ।
सो लोय-पालण-निमित्तमव्ववत्था हवइ इहरा ॥
जं च रुयंतीण धणं महंत-पीडा-निबंधणत्तेण ।
बहु-पाव-बंध-हेउं अओ परं तं पि वज्जिस्सं ॥

गुरुणोक्तं—

न यन्मुक्तं पूर्वं रघु-नघुष-नाभाग-भरत-
प्रभृत्युर्वीनाथैः कृतयुगकृतोत्पत्तिभिरपि ।
विमुञ्चन् संतोषात्तदपि रुदतीवित्तमधुना
कुमार-क्ष्मापाल ! त्वमसि महतां मस्तकमणिः ॥
इय सोमप्पह-कहिए कुमारनिव- हेमचंद-पडिबद्धे ।
जिण-धम्म-प्पडिबोहे समत्थिओ पढम-पत्थावो ॥

इत्याचार्यश्रीसोमप्रभविरचिते कुमारपालप्रतिबोधे प्रथमः प्रस्तावः ॥



# अथ द्वितीयः प्रस्तावः।

राज्ञो देवपूजोपास्तिविषयकोपदेशः।

अन्नं च सुणसु पत्थिव ! जीव-दया-लक्खणो इमो धम्मो। पृष्ठ ११६.
जेण सयं अणुचिन्नो कहिओ अ जणस्स हिअ-हेउं।
सो अरहंतो देवो असेस-रागाइ-दोस-परिचत्तो।
सव्वन्नू अवितह-सयल-भाव-पडिवायण-पहाणो॥
रागाइ-जुओ रागाइ-परवसं रक्खिउं परं न खमो।
नहि अप्पणा पलित्तो परं पलित्तं निवारेइ॥
धम्मा-धम्मसरूवं सक्कइ कहिउं कहं असव्वन्नू।
रूव-विसेसं वोत्तुं अत्थि किमंधस्स अहिगारो॥
परमत्थं अकहंतो वि होइ देवो त्ति जुत्तिरित्तमिणं।
गयणस्स वि देवत्तं अणुमन्नह अन्नहा किं न॥
जो अरहंतं देवं पणमइ झाएइ निच्चमच्चेइ।
सो गयपावो पावेइ देवपालो व्व कल्लाणं॥

( अत्र देवपालकथानकादिकान्यनुसन्धेयानि )

कुमारपालकारित-कुमारविहारादि-जैनमन्दिरवर्णनम्।

जंपइ कुमर-नरिंदो—मुणिंद ! तुह देसणामयरसेण। पृष्ठ १४३.
संसित्त-सव्व-तणुणो मह नट्ठा मोह-विस-मुच्छा॥
मुणियं मए इयाणिं जं देवा जिणवरा चउव्वीसं।
जे राग-दोस-मय-मोह-कोह-लोहेहिं परिचत्ता॥
नवरं पुव्वं पि मए भद्दग-भाव-प्पहाण-चित्तेण।
पडिहय-पाव-पवेसं लद्धं तुम्हाण उवएसं॥
सिरिमाल वंस-अवयंस-मंति-उदयण-समुद्द-चंदस्स।
मइ-निज्जिय-सुरगुरुणो धम्म-दुम-आलवालस्स॥
नयवंत-सिरो-मणिणो विवेय-माणिक्क-रोहणगिरिस्स।
सच्चरिय-कुसुम-तरुणो वाहडदेवस्स मंतिस्स॥
जय-पायड-वायड-कुल-गयणालंकार-चंद-सूराणं।
गग्ग-तणयाण तह सव्वदेव-संबाण-सेट्ठीण॥
दाऊण य आएसं 'कुमरविहारो' कराविओ एत्थ। पृष्ठ १४४.
अट्ठावओ व्व रम्मो चउवीस-जिणालओ तुंगो॥
कणयामलसार-पहाहिं पिंजरे जम्मि मेरुसारिच्छे।
रेहंति केउदंडा कणय-मया कप्प-रुक्ख व्व॥
स्तम्भैः कन्दलितेव काञ्चनमयैरुत्कृष्टपट्टांशुको-

ल्लोचैः पल्लवितेव वैः कुसुमितेवोच्चूलमुक्ताफलैः ।
सौवर्णैः फलितेव यत्र कलशैराभाति सिक्ता सती
श्रीपार्श्वस्य शरीरकान्तिलहरीलक्षेण लक्ष्मीलता ॥
पासस्स मूलपडिमा निम्मविया जत्थ चंदकंतमई ।
जण-नयण-कुवलउल्लास-कारिणी चंद-मुत्ति व्व ॥
अन्नाओ वि बहुयाओ चामीयर-रुप्प-पित्तलमईओ ।
लोयस्स कस्स न कुणंति विम्हयं जत्थ पडिमाओ ॥
संपइ देव-सरूवं मुणिऊण समुल्लसंत-सुह-भावो ।
तित्थयर-मंदिराइं सव्वत्थ वि कारविस्सामि ॥
तत्तो इहेव नयरे कारविओ कुमरवाल-देवेण ।
गरुओ 'तिहुण-विहारो' गयण-तलुत्तंभण-क्खंभो ॥
कंचणमय-आमलसार-कलस-केउप्पहाहिं पिंजरिओ ।
जो भन्नइ सव्वं चिय जणेण मेरु त्ति पासाओ ॥
जंसि महप्पमाणा सव्वुत्तम-नीलरयण-निम्माया ।
मूल-पडिमा निवेणं निवेसिया नेमिनाहस्स ॥
कुसुमोह-अच्चिया जा जणाण काउं पवित्तयं पत्ता ।
गंगा-तरंग-रंगंत-चंगिमा सहइ जउण व्व ॥
वट्टंताण जिणाणं रिसह-प्पमुहाण जत्थ चउवीसा ।
पित्तलमय-पडिमाओ काराविया देवउलियासु ॥
पत्तमइक्कंताणं तह भावीणं जिणाण पडिमाओ ।
चउवीसा चउवीसा निवेसिया देवउलियासु ॥
इय पयडिय-धय-जसडंबराहिं बाहत्तरीइ जो तुंगो ।
सप्पुरिसो व्व कलाहिं अलंकिओ देवकुलियाहिं ॥
अन्नेवि चउव्वीसा चउवीसाए जिणाण पासाया ।
काराविया तिविहार-प्पमुहा अवरे वि इह बहवो ॥
जे उण अन्ने अन्नेसु नगर-गामाइएसु कारविया ।
तेसिं कुमर-विहाराण को वि जाणइ न संखं पि ॥ पृष्ठ १४५.
अह गुरुणा वागरियं देव-सरूवं जहट्ठियं तुमए ।
गुरुतत्त्वोपदेशः । सुणियं, नरिंद ! संपइ गुरु-तत्तं तुज्झ अक्खेमि ॥
अत्थमिएसु जिणेसुं सूरेसु व हरिय-मोह-तिमिरेसु ।
जीवाइ-पयत्थे दीवओ व्व पयडइ गुरु चेय ॥
गुरु-देसणा-वरत्त वर-गुण-गुच्छं विणा गहीराओ ।
संसार-कूव-कुहराउ निग्गमो नत्थि जीवाणं ॥

गुरुणो कारुन्न-घणस्स देसणा-पय-भरेण सित्ताण ।
भविय-दुमाणं विज्झाइ झत्ति मिच्छत्त-दावग्गी ॥
जो चत्त-सव्व-संगो जिइंदिओ जिय-परीसह-कसाओ ।
निम्मल-सील-गुणड्ढो सो चेय गुरू न उण अन्नो ॥
नरय-गइ-गमण-जुग्गे कए वि पावे पएसिणा रन्ना ।
जं अमरत्तं पत्तं तं गुरु-पाय-प्पसाय-फलं ॥

(अत्र प्रदेशिराजादीनां कथा अनुसन्धेयाः)

गुरुसेवाफले सम्प्रतिनृपोदाहरणम्।

चिंतामणि-कप्पदुम-कामदुहाईणि दिव्व-वत्थूणि । पृष्ठ १६६.
जण-वंछियत्थ-करणे न गुरूणि गुरु-प्पसायाओ ॥
जो पेच्छिऊण पावंति पाणिणो मणुय-तियस-सिद्धि-सुहं ।
करुणा-कुल-भवणाणं ताण गुरूणं कुणह सेवं ॥
दमगो वि पुव्व-जम्मे जं महिवइ-निवह-नमिय-पय-कमलो ।
जाओ संपइ-राओ तं गुरु-चलणाण माहप्पं ॥

(अत्र सम्प्रतिकथाऽनुसन्धेया)

सम्प्रतिनृपतेरिव कुमारपालस्य रथयात्रोत्सवकरणम्।

इय संपइ-निव-चरियं निसामियं हेमसूरि-पहु-पासे । पृष्ठ १७४.
राया कुमारवालो तहेव कारवइ रहजत्तं ॥
तं जहा—
नच्चंत-रमणि-चक्कं विसाल-बलि-थाल-संकुलं राया ।
कुणइ कुमार-विहारे सासय-अट्ठाहिया-महिमं ॥
नट्ठट्ठ-कम्ममट्ठ वि दिणाइं सयमेव जिणवरं ण्हविउं ।
गुरु-हेमचंद-पुरओ कयंजली चिट्ठइ नरिंदो ॥
अट्ठम-दिणम्मि चित्तस्स पुण्णिमाए चउत्थ-पहरम्मि ।
नीहरइ जिण-रहो रवि-रहो व्व आसाओ पयट्टंतो ॥
ण्हविय-विलित्तं कुसुमोह-अच्चियं तत्थ पासजिण-पडिमं ।
कुमर-विहार-दुवारे महायणो ठवइ रिद्धीए ॥
तूर-रव-भरिय-भवणो स-रहस-नच्चंत-चारु-तरुणि-गणो ।
सामंत-मंति-सहिओ वच्चइ निव-मंदिरम्मि रहो ॥
राया रहत्थ-पडिमं पट्टंसुय-कणय-भूसणाईहिं ।
सयमेव अच्चिउं कारवेइ विविहाइं नट्टाइं ॥
तत्थ गमिऊण रयणिं नीहरिओ सीह-वार-बाहिंमि ।
ठाइ पडंचिय-धय-तंडवम्मि पड-मंडवम्मि रहो ॥ पृष्ठ १७५.
तत्थ पहाए राया रह-जिण-पडिमाइ विरइउं पूयं ।

चउविह-संघ-समक्खं सयमेवारत्तियं कुणइ ॥
तत्तो नयरम्मि रहो परिसक्कइ कुंजरेहिं जुत्तेहिं ।
ठाणे ठाणे पड-मंडवेसु विउलेसु चिट्ठंतो ॥

किञ्च—

प्रेङ्खन्मण्डपमुल्लसद्ध्वजपटं नृत्यद्वधूमण्डलं
चञ्चन्मञ्चमुदञ्चदुच्चकदलीस्तम्भं स्फुरत्तोरणम् ।
विश्वग्जैनरथोत्सवे पुरमिदं व्यालोकितुं कौतुका-
ल्लोका नेत्रसहस्रनिर्मितिकृते चक्रुर्विधेः प्रार्थनाम् ॥

एवं अट्ठ-दिणाइं रह-जत्तं जणिय-जण-चमक्कारं ।
कुणइ जहा कुमर-निवो तहेव आसोय-मासे वि ॥
जंपइ निय-मंडलिए एवं तुब्भे वि कुणह जिणधम्मं ।
ते निय-निय-नयरेसुं कुमर-विहारे करावेंति ॥
विरयंति वित्थरेणं जिण-रह-जत्तं कुणंति मुणि-भत्तिं ।
तत्तो समग्गमेयं जिणधम्म-मयं जयं जायं ॥
अन्न-दिणम्मि मुणिंदो कुमर-विहारे कुमारवालस्स ।
चउ-विह-संघ-समेओ चिट्ठइ धम्मं पयासंतो ॥
बहु-विह-देसेहिंतो धणवंतो तत्थ आगओ लोओ ।
पट्टंसुय-कणय-विभूसणेहिं काऊण जिणपूयं ॥
कणय-कमलेहिं गुरुणो चलण-जुयं अच्चिऊण पणमेइ ।
तत्तो कयंजलि-उडो नरवइणो कुणइ पणिवायं ॥
तो पत्थिवेण भणियं—किमत्थमेत्थाऽऽगओ इमो लोओ ? ।
एक्केण सावएणं भणियमिणं सुण महाराय ! ॥

पूर्वं वीरजिनेश्वरेऽपि भगवत्याख्याति धर्मं स्वयं
प्रज्ञावत्यभयेऽपि मन्त्रिणि न या कर्तुं क्षमः श्रेणिकः ।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधा-
द्यस्या यस्य वचःसुधां स परमः श्रीहेमचन्द्रो गुरुः ॥
तत्पादाम्बुजपांशुभिः प्रथयितुं शुद्धिं परामात्मन-
स्तद्वक्त्रेन्दुविलोकनेन सफलीकर्तुं निजे लोचने ।
तद्वाक्यामृतपानतः श्रवणयोराधातुमत्युत्सवं
भक्त्युत्कर्षकुतूहलाकुलमना लोकोऽयमत्रागतः ॥ पृष्ठ १७६.

ता नरनाह ! कयत्था अम्हे, अम्हाण जीवियं सहलं ।
जेहिं नमिओ मुणिंदो पच्चक्खो गोयमो व्व इमो ॥
जिणधम्मे पडिवत्ती दूसम-समए असंभवा तुज्झ ।

निर्गत्य यदसिद्धार्थो निवृत्तोसि न तद्वरम् ।
प्रारब्धत्यागिनो मर्त्याः कस्य हास्यकृतो न हि ॥
स्वर्णशून्यः कथं वक्त्रं स्वं पितुर्दर्शयिष्यसि ।
स प्रोवाच विचारेण किं वः पश्यत कौतुकम् ॥
अथ कर्पटिकः कश्चित् करस्थः करपत्रिकः ।
दधन्नागफणं कक्षापुटं मलिनविग्रहः ॥
तृणपूलयुतं वंशं बिभ्राद्राजकुलाग्रतः ।
अन्यायो मुषितोऽस्मीति निजगाद गुरुस्वरम् ॥
तदाकर्ण्य सभासीनो राजा वेत्रिणमादिशत् ।
अन्यायं पूत्करोत्येष मद्राज्ये केन हेतुना ॥
प्रतीहारस्तमानीय पप्रच्छ नृपतेः पुरः ।
पूत्करोषि किमन्यायं मुषितः केन वा भवान् ॥
सोऽवोचत्सेवितोऽम्भोधिर्मया द्वादशवत्सरीम् ।
सोऽदान्मह्यं चतुःकोटीमूल्यं रत्नचतुष्टयम् ॥
निक्षिप्य यष्टिमध्ये तदत्रायातो नदीतटे ।
सुप्तो रात्रावहं यष्टिं भित्त्वा तत्कश्चिदग्रहीत् ॥
इति श्रुत्वा नृपोऽवोचत् सचिवं तनयोऽपि मे ।
यदि जग्राह रत्नानि कृत्वा तस्यापि निग्रहम् ॥
समर्प्पयास्य रत्नानि ततः कर्पटिकोऽवदत् ।
स एव निग्रहार्हो यस्तद्ग्रहं मन्यते स्वयम् ॥
यः पुनस्तानि रत्नानि गृहीत्वाऽपि न मन्यते ।
न तस्य निग्रहः कार्य इत्यर्थे शपथोऽस्तु वः ॥
ततोऽमात्येन सर्वत्र पुरेऽकार्यत घोषणा ।
यो रत्नान्यग्रहीत् कोऽपि स तान्यर्पयतु द्रुतम् ॥
तच्छ्रुत्वाऽचकथद्रत्नवृत्तान्तं मकरध्वजः ।
एतान्यस्यार्पयेत्युक्त्वा मन्त्री राज्ञे न्यजिज्ञपत् ॥
क्रुद्धो राजा कुमारस्य वधायामात्यमादिशत् ।
द्वेष्यः पर इव स्वोऽपि न्यायिनां हि नयोज्झितः ॥
अथ द्योतितदिक्चक्रो भूत्वा कर्पटिकः सुरः ।
जगाद जगतीज्येष्ठं राजन् ! जयति ते कुलम् ॥

यत्रोत्पेदे पदं वाचां सत्यानां मकरध्वजः ।
कोऽयं वृत्तांत इत्युचे तं विस्मितमुखो नृपः ॥
तेनोक्तं तत्पुरोद्यानाध्यक्षो यक्षोऽस्मि षण्मुखः ।
रजन्यां तु निजैः पुण्यैर्लब्ध्वा रत्नचतुष्टयम् ॥
कुमारो मद्गृहं प्राप स श्रुत्वा मुनिदेशनाम् ।
सत्यवाग्व्रतमादाय प्रातः स्वगृहमागमत् ॥
अथादित्योदये गच्छन्नप्रच्छि स मुनिर्मया ।
सत्यवाग्व्रतमेतत् किं कुमारः पालयिष्यति ॥
किं वाहमिव लोभेन बाधितः खण्डयिष्यति ।
साधुरूचे व्रतं नैष प्राणत्यागेऽपि लोप्स्यति ॥
ततोऽमुष्य परीक्षार्थमहं कर्पटिकोऽभवम् ।
रत्नेष्वपि निरीहोऽसौ न सत्यव्रतमत्यजत् ॥
अस्यास्ति सदृशः कश्चिन्नान्यः सत्वनिधिः पुमान् ।
इत्युक्त्वान्यदपि द्रव्यं दत्वाऽस्मै व्यन्तरो ययौ ॥
कुमारस्य वचः सत्यं रत्नलाभं च तादृशम् ।
दृष्ट्वा हृष्टो नृपः प्रोचे सचिवान्निखिलानिदम् ॥
अयमेव महासत्त्वः सत्यवाक् सुकृतास्पदम् ।
लघुरप्येष निःशेषकुमाराणां गुणैर्महान् ॥
अस्याद्भुतेन सत्येन पुण्येन च कदाचन ।
न देशे भविता दौस्थ्यं दुर्भिक्षडमरादिकम् ॥
ततो राज्यभरं वोढुमयं धत्ते धुरीणताम् ।
इत्युक्त्वा तं नृपो राज्ये निवेश्य जगृहे व्रतम् ॥
राज्यं सत्यप्रधानोऽयं व्यधत्त मकरध्वजः ।
लीलयैवाखिलास्तस्य भूपालाः प्रणतिं ययुः ॥
कुर्वाणेन जिनेन्द्रार्चां तेन साधून्नमस्यता ।
पात्रेभ्यो ददता वित्तं जगृहे जन्मनः फलम् ॥
पालयित्वा चिरं राज्यं स्मरन् पञ्चनमस्क्रियाम् ।
मृत्वोत्पन्नः सहस्रारे त्रिदशो मकरध्वजः ॥
इति कृतमृषावादत्यागव्रतो मकरध्वजो
व्यलभत भवेऽप्यस्मिन् कीर्तिं श्रियं च दुरासदाम् ।

सुरनरसुखं भुक्त्वा भूयः परत्र विकल्मषः
शिवपदपुरीसाम्राज्यं स क्रमेण करिष्यति ॥

इति मृषावादविरतौ मकरध्वजकथा ।

---

जं चोरं कारकरस्स खत्त-खणणाइणा पर-धणस्स ।
दुविह-तिविहेण-वज्जणमणुव्वयं विंति तं तइयं ॥
जो न हरइ पर-दव्वं इहावि सो लहइ न वह-बंधाइं ।
पर-लोए पुण पावइ सुर-नर-रिद्धीओ विउलाओ ॥
एक्कस्स चेव दुक्खं मारिज्जंतस्स होइ खणमेक्कं ।
जावज्जीवं सकुडुंबयस्स पुरिसस्स धण-हरणे ॥
दव्वं परस्स बज्झं जीयं जो हरइ तेण सो हणिओ ।
दव्व-विगमे जओ जीयमंतरंगं पि जाइ खयं ॥
जं खत्त-खणण-बंद-ग्गहाइ-विहिणा परस्स धण-हरणं ।
पच्चक्ख-दिट्ठ-दोसं तं चिट्ठउ दूरओ ताव ॥
पर-वंचणेण घेत्तुं दिंतस्स वि पर-धणं पर-भवम्मि ।
पर-गेहे चिय वच्चइ दत्तस्स व वणिय-पुत्तस्स ॥

तं जहा—

अत्थि सुर-भवण-सिहरग्ग-लग्ग-दिणयर-रह-तुरय-मग्गं ।
पुरमित्थ पइट्ठाणं लोउत्तर-संपया-ट्ठाणं ॥
तत्थ पयावसीहो निवो पयावानलो नवो जस्स ।
रिउ-रमणि-नयण-नीर-प्पवाह-सेत्तो वि पज्जलइ ॥
चिट्ठंति तत्थ विच्छिन्न-रित्थ-कुल-संभवा वणिय-पुत्ता ।
अन्नोन्न-नेह-जुत्ता दत्तो संखायणो य दुवे ॥
देसंतराइं गंतुं धणज्जणं जुव्वणे न जो कुणइ ।
किं कूव-दद्दुरस्स व तस्स पसंसिज्जए जीयं ॥
इय मंतिऊण दुन्निवि परोप्परं निग्गया निय-पुराओ ।
महिमंडले भमंता कमेण पत्ता रयणदीवं ॥
रयणाइं तत्थ संखायणेण पत्ताइं न उण दत्तेण ।
पुरिसस्स हि पुव्व-कयं सुकयं चिय फलइ सव्वत्थ ॥

संखायणो पयट्टो अन्न-दिणे नियय-देसमागंतुं ।
दत्तो उण अकयत्थो त्ति ठाउमहिलसइ तत्थेव ॥
साहारणाइँ दुण्हवि इमाइँ रयणाइँ अम्ह इय भणिउं ।
संखायणेण दत्तो वि अप्पणा सह समाणीओ ॥
सत्थेण सहागच्छंति दोवि ते रयण-संवलत्थइयं ।
मग्गे वहंति कमसो जा पत्ता निय-पुरासन्नं ॥
ता तत्थ भिल्ल-धाडी पडिया दत्तेण निय-करत्थाइं ।
खित्ताइँ अणुवलक्खं रयणाइं रुक्ख-गहणम्मि ॥
अह ताडिऊण दत्तं तस्स सयासाउ संवलत्थइया ।
भिल्लेहिं जम-भडेहिं व गहिया संखायण-समक्खं ॥
नीया पल्लिं भिल्लेहिं कइवि दियहाइं तत्थ धरिऊण ।
मुक्का अनन्न-दिसाहि दोवि पत्ता पइट्ठाणं ॥
जइ कहवि रयण-लाभो न होइ ता होहमलियवाइ त्ति ।
संखायणस्स कहिओ दत्तेण न रयण-वुत्तंतो ॥
अन्न-दिणे तत्थ गओ दत्तो पत्ताइं तेण रयणाइं ।
न समप्पियाइं संखायणस्स एसो परोक्खो त्ति ॥
अह कित्तियम्मि काले गयम्मि पियरो इमाण काल-गया ।
जाया पमाण-भूया एए चिय दोवि सव्वत्थ ॥
संखायणो धणड्ढो देव्व-वसेणं न तारिसो दत्तो ।
सो चिंतइ रयण- कए खिज्जइ संखायणो न इमो ॥
कुणइ परलोग-किरियाओ एस तत्तो अहं पि एयाओ ।
एयं चिय उद्दिसिउं करेमि एएहिं रयणेहिं ॥
एवं कए न होही मित्त-द्दोहो वि तो कुणइ दत्तो ।
परलोग-किच्चमत्थि य सेनेहो धम्म-बुद्धी य ॥
एवं नियाउयं पालिऊण आउ-क्खये मया दोवि ।
जत्थुप्पन्ना तं वागरेमि नर-नाह ! निसुणेसु ॥
चिट्ठंति दुन्नि नयरीओ उत्तरा दाहिणा य महुराओ ।
महुराउ सुयण-वाणीउ जत्थ दक्ख व्व विलसंति ॥
पत्त-घण-च्छायाओ भमरहियाओ लसंत-सुमणाओ ।
जत्थ वणेसु लयाओ भवणेसु वसंति विलयाओ ॥

तत्थोत्तर-महुराए समिद्धदत्तो त्ति वाणिओ अत्थि ।
सो विहव-विढवणत्थं दक्खिण-महुरं कयाइ गओ ॥
तस्स तहिं विविह-कयाणगाण कय-विक्कए कुणंतस्स ।
जाओ असोगदत्तेण वाणिएणं सह सिणेहो ॥
तस्स थिरीकरणत्थं दोहिं पि कओ इमेहिं संकेओ ।
एक्कस्स सुओ धूयं परेण परिणावियव्वो त्ति ॥
कइवय-दिणाइं ठाउं समिद्धदत्तो गओ नियय-नयरिं ।
संखायणस्स जीवो कमेण जाओ सुओ तस्स ॥
दत्तस्स पुणो जीवो असोगदत्तस्स नंदणो जाओ ।
भवियव्वयाइं तेसिं विहियाइं पुव्व-नामाइं ॥
कय-उचिय-कला-गहणा कमेण ते दोवि जुव्वणं पत्ता ।
संखायणस्स भगिणी जाया दत्तस्स सा दिन्ना ॥
इय कित्तिए वि काले गयम्मि अकयम्मि चेव वीवाहे ।
ताण पियरो विवन्ना ते च्चिय घर-सामिणो जाया ॥
तत्थत्थि कुबेरस्स व गरुओ दत्तस्स रिद्धि-वित्थारो ।
सो तं सयमुवभुंजइ जहोचियं देइ अन्नेसिं ॥
अन्न-दिणम्मि निविट्ठो ण्हाणत्थं मणिमयम्मि सो पीढे ।
चत्तारि उवट्ठविया कलसा कंचणमया तस्स ॥
तह चउरो रुप्पमया तंबमया मिम्मया य पत्तेयं ।
एवं ण्हाणोवगरणमन्नं पि इमस्स साहसयं ॥
तं ण्हविऊण विमुक्को तत्थेक्को उड्डिओ कणय-कलसो ।
एवं चउरो वि गया एवं चिय रुप्पियाई वि ॥
ण्हाणोवगरणमन्नं पि जं महत्थं तमुड्डियं एवं ।
अह दत्तो भुत्तुमणो भोयण-सालाइ संपत्तो ॥
तस्स पुरो ठवियाइं कंचण-कच्चोल-रुप्प-थालाइं ।
दिन्ना सुवन्न-थाली दव्वी पमुहेहिं आहारो ॥
भुत्तस्स तस्स सव्वं पि थाल-कच्चोल-पमुहमुड्डीणं ।
थालस्स कन्न-वट्टी धरिया कुड्डेण दत्तेण ॥
तित्तियमेत्तं खंडं दत्तस्स करे ठियं तओ एसो ।
अहह अउव्वं विहि-विलसियं ति चिंताउरो जाओ ॥

अह तस्स विणट्ठाइं जलहि-निहित्ताइं जाणवत्ताइं।
थल-पह-पट्ठवियं तक्करेहिं हरियं सयल-भंडं॥
नट्ठाइं निहाणाइं गयाइं विहलत्तणं करिसणाइं।
कण-कप्पड-प्पमुहाइं दड्ढाइं अग्गिणा गेहे॥
कय-विक्कएसु छेओ होइ न लब्भइ कलंतर-निउत्तं।
न कुणंति य सम्माणं परियण-बंधुयण-नायरया॥

जओ—

रिद्धि विहूणह माणुसह न कुणइ कुवि सम्माणु।
सउणिहि मुचइ फलरहिउ तरुवरु इत्थु पमाणु॥
लच्छीइ विलसियं तं दट्ठुं सुविणिंदियाल-सारिच्छं।
विम्हय-विसाय-विवसो आढत्तो चिंतिउं दत्तो॥
खणमेत्त-दिट्ठ-नट्ठा हा! लच्छी जेण तेण तक्केमि।
तडिलय-तरंग-सुरधणु-दव्वेण कया इमा विहिणा॥
जइवि हु सूरु सुरूवु विअक्खणु
तहवि न सेवइ लच्छि पइक्खणु।
पुरिस-गुणागुण-मुणण-परम्मुह
महिलह बुद्धि पयंपहिं जं बुह॥
संतिं पि सिरिं मोत्तूण उत्तमा संजमं पवज्जंति।
अहमा दूर-गयं पि हु तं पत्थंता किलिस्संति॥
तो मज्झ इमीए अलं ति चिंतिउं निग्गओ निय-गिहाओ।
दत्तो परिब्भमंतो भरुअच्छं पट्टणं पत्तो॥
निव्वाण-मग्ग-साहण-कयायरो पाव-कायरो दिट्ठो।
गुण-रयण-सायरो तेण तत्थ धम्मायरो सूरी॥
तं दट्ठूण मुणिंदं चंदं जलहि व्व सो समुल्लसिओ।
नमिऊण रिद्धि-भेए पुच्छइ, अह कहइ आयरिओ॥
धम्मिड्ढी भोगिड्ढी पाविड्ढी इह तिहा भवे रिद्धी।
सा भन्नइ धम्मिड्ढी जा दिज्जइ धम्म-कज्जेसु॥
सा भोगिड्ढी गिज्जइ सरीर-भोगम्मि जीए उवओगो।
जा दाण-भोग-रहिया सा पाविड्ढी अणत्थ-फला॥

पाविट्ठी पाविज्जइ फलेण पावस्स पुव्व-विहियस्स ।
पावेण भाविणा वा इत्थत्थे सुणसु दिट्ठंतं ॥
इह आसि वसंतपुरे परोप्परं नेह-निब्भरा मित्ता ।
खत्तिय-माहण-वाणिय-सुवण्णयार त्ति चत्तारि ॥
ते अत्थ विढवणत्थं चलिया देसंतरं निय-पुराओ ।
पत्ता परिब्भमंता भूमिपइट्ठम्मि नयरम्मि ॥
रयणीइ तस्स बाहिं उज्जाणे तरुतलम्मि पासुत्ता ।
पढम-पहरम्मि चिट्ठइ जग्गंतो खत्तिओ तत्थ ॥
पेच्छइ तरु-साहाए पलंबमाणं सुवण्ण-पुरिसं सो ।
विम्हिय-मणेण भणियं अणेण सो एस अत्थो त्ति ॥
कणय-पुरिसेण संलत्तमत्थि अत्थो परं अणत्थ-जुओ ।
तो खत्तिएण वुत्तं जइ एवं ता अलं अम्ह ॥
बीए जामे जग्गेइ माहणो सोवि पिच्छइ तहेव ।
तइयम्मि वाणिओ तं दट्ठूण न लुब्भए तम्मि ॥
जग्गइ चउत्थ-जामे सुवण्णयारो सुवण्ण-पुरिसं तं ।
दट्ठूण विम्हिय-मणो भणइ इमं एस अत्थो त्ति ॥
पुरिसेण जंपियं एस अत्थि अत्थो परं अणत्थ-जुओ ।
जंपइ सुवण्णयारो न होइ अत्थो अणत्थ-जुओ ॥
पुरिसो जंपइ तो किं पडामि ?, पडसु त्ति जंपइ कलाओ ।
पडिओ सुवण्ण-पुरिसो छिंदइ सो अंगुलिं तस्स ॥
खड्डाए पक्खित्तो सुवण्ण-पुरिसो सुवण्णयारेण ।
गोसम्मि पत्थिया ते सुवण्णयारेण तो भणिया ॥
किं देसंतर-भमणेण अत्थि एत्थवि इमो कणय-पुरिसो ।
खड्डाइ मए खित्तो तं गिण्हह विभज्जिउं सव्वे ॥
तो सव्वेवि नियत्ता अंगुलि-कणगेण भत्तमाणेउं ।
वणिओ सुवण्णयारो य दोवि पत्ता नयर-मज्झे ॥
चिंतियमिमेहिं हणिमो खत्तिय-माहण-सुए उवाएण ।
अम्हं चिय दोण्हं जेण होइ एसो कणय-पुरिसो ॥
भुत्तूण सयं मज्झे समागया गहिय-कुसुम-तंबोला ।
खत्तिय-माहण-जुग्गं विस-मिस्सं भोयणं घेत्तुं ॥

वाहिं ठिएहिं तं चेव चिंतियं किं चिरं ठिया मज्झे ।
तुब्भे त्ति भणंतेहिं दुन्निवि खग्गेण निग्गहिया ॥
विस-मिस्सं भत्तं भुंजिऊण दिय-खत्तियावि वावन्ना ।
इअ एसा पाविड्ढी पाविज्जइ पाव-पसरेणं ॥
सव्वा असासय चिय रिद्धी परमत्थओ भव-निमित्तं ।
मोक्खो अकिंचणाणं जीवाण जिणेहिं जं भणिओ ॥
इय धम्म-देसणाए पडिबुद्धो एस गंठि-भेएण ।
चारित्त-मोहणिज्जं इमस्स पत्तं खओवसमं ॥
पव्वइओ पर-पडिबोहणत्थमविमुक्क-थालखंडो सो ।
अहिगय-समत्त-सुत्तो करेइ तिव्वं तवचरणं ॥
अन्न-समयम्मि एसो उत्तरमहुरं गओ विहरमाणो ।
भिक्खा-कए भमंतो पत्तो संखायणस्स गिहं ॥
निय-रिद्धि-वित्थरं तं दट्ठूण इमस्स मज्जमाणस्स ।
पुण्णो किमूणगो व त्ति कोउगेण ट्ठिओ तत्थ ॥
दिन्ना इमस्स भिक्खा तहवि न निहरइ एस तो भोत्तुं ।
संखायणो पवत्तो वहिणीए वीयण-कराए ॥
भणिओ अणेण साहू—किं जासि तुमं न लद्ध-भिक्खो वि ।
किं वालियं पलोयसि ?, मुणिणा संखायणो भणिओ ॥
विसए विसं व विसमे वियाणिउं जे पवन्न-पव्वज्जा ।
ते जिय-मयणा मुणिणो तणं व तरुणीओ मन्नंति ॥
किंतु ठिओ रिद्धि-कुऊहलेण अहमेत्थ इत्तियं कालं ।
संखायणेण भणियं रिद्धिं गिण्हाहि देमि अहं ॥
जंपइ मुणी न कज्जं धयवड-चवलाइ मज्झ रिद्धीए ।
संखायणेण भणियं जइ एवं ता कहं कुइं ॥
मुणिणा भणियं तुह आगयस्स वसहीइ तं कहिस्सामि ।
संखायणेण भणियं एवं ति तओ, गओ साहू ॥
समए वसहिं गंतुं नमिउं संखायणो रहसि साहुं ।
कह कोउगं ति पुच्छइ मुणी भणइ तुह कुओ रिद्धी ॥
संखायणो पयंपइ कमागया से इमा, मुणी भणइ ।
सच्चं साहसु, संखायणेण भणियं असुग-दियहे ॥

कत्तो वि अकम्हा आगय त्ति तह अत्थि खंडथालमिह ।
तं पुण तह चेव ठियं समारिउं तीरइ न जम्हा ॥
दत्तेण कन्नवट्टिं समप्पिउं जंपिओ इमो भद्द ! ।
एएण समारिज्जसु घडइ त्ति समारियं तेण ॥
संजाय-कोउगो संभमेण संखायणो भणइ दत्तं ।
भयवं ! कहसु किमेयं जइट्ठियं साहए एसो ॥
एवमिणंति पवज्जइ एसो जाणइ य सयण-संबंधं ।
तो भणइ मज्झ भइणि परिणेउं भुंज निय-रिद्धिं ॥
दत्तो जंपइ भोगा भुयंग-भोग व्व जे मए मुक्का ।
पत्थेमि पुणवि संपइ अमूढ-सन्नो कहं तेऽहं ॥

तथा—

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥

इय सोउं पडिबुद्धो दिक्खं संखायणो वि पडिवन्नो ।
कय-तिव्व-तवा मरिऊण दोवि सग्गं सिवं च गया ॥
जं पुव्व-भवे संखायणस्स दत्तेण वित्तमवलवियं ।
तो दत्त-गिहाओ गयं परत्थ संखायणस्स गिहं ॥

इति अस्तेयव्रते दत्त-संखायण-कथा ।

---

जं निय-निय-भंगेहिं दिव्वाणं माणुसाण तिरियाणं ।
परदाराणं विरमणमणुव्वयं विंति तं तुरियं ॥
चउ-विह-कसाय-मुक्को चउ-गइ-संसार-भमण-निव्विण्णो ।
जो धरइ चउत्थ-वयं सो लहइ चउत्थ-पुरिसत्थं ॥
निव्वडिय सुहड-भावाण ताण को वहउ एत्थ समसीहिं ।
परि-रमणि-संकडे निवडिया वि न मुयंति जे मेरं ॥
इणमेव धम्म-वीयं इणमेव विवेय-कणय-कसवट्टो ।
इणमेव दुक्करं जं कीरइ परदार-विरइ-वयं ॥
यः पालयति निर्व्याजं परस्त्रीविरतिव्रतम् ।
परत्रेह च स श्रेयः पुरंदर इवाश्नुते ॥

तद्यथाऽस्त्यत्र विस्तीर्णे जम्बूद्वीपस्य भारते ।
महाधनजनाकीर्णं विलासपुरपत्तनम् ॥
शुभा रम्भाकीर्णाः प्रचलदलकान्ताः सतिलकाः
प्रपन्नाः पुन्नागैरसमलवलिव्यक्तरुचयः ।
बहिर्यत्रान्तश्च प्रकटितमहामानवकुला:
सदारामाः पुंसां पृथुलकुचरम्या मुदमदुः ॥
तत्र सिंहरथो राजा शूरः सिंह इवाभवत् ।
चित्रं क्रमागतं मार्गं यो बिभेद न जातुचित् ॥
यत्कृपाणलतालग्नद्विषल्लोहितपल्लवाः ।
सुषुवे दिग्वधूत्तंसं यशः कुसुममाहवे ॥
तस्य सुन्दरदेहस्य देवी कनकवत्यभूत् ।
अनङ्ग इति कन्दर्पं त्यक्त्वा रतिरिवागता ॥
तयोर्भुञ्जानयोर्भोगान् पूर्वपुण्यसमुद्भवान् ।
सौन्दर्यनिर्जितामर्त्यकुमारस्तनयोऽभवत् ॥
पुरन्दर इति ख्यातः सोऽधीत्य सकलाः कलाः ।
कामिनीमानसोन्मादजननं यौवनं ययौ ॥
सोऽगादन्येद्युरुद्यानं द्रुमराजिविराजितम् ।
तत्र नानाविधाः क्रीडाः कुर्वन् बभ्राम सर्वतः ॥
सोऽपश्यत्खेचरं कश्चिद्वेदनानष्टचेतनम् ।
कीलितं तरुणा सार्द्धं हस्तयोः पादयोस्तथा ॥
कुमारः करुणाक्रान्तस्तस्य निष्कास्य कीलकान् ।
संरोहण्योषधीयोगाद्व्रणसंरोहणं व्यधात् ॥
स्वस्थीभूतं तमप्राक्षीत् कुमारः किं तवेदृशी ।
दर्शनीयाकृतिव्यक्तगुणस्याप्यभवद्दशा ॥
अवोचत् खेचरो यद्यप्यवच्यं चरितं मम ।
तथापि कथयाम्येष तव जीवितदायिनः ॥
अस्ति प्रशस्तमुत्तुङ्गमणिमन्दिरसुन्दरम् ।
वैताढ्यस्योत्तरश्रेण्यां पुरं गगनवल्लभम् ॥
तत्र विद्याधराधीशो रत्नचूडोऽस्ति विश्रुतः ।
अनिरुद्धः स्मरस्येव सूनुस्तस्यास्मि सूर्पकः ॥

सोऽहं यौवनमासाद्य चण्डानिलमिवानलः ।
तमवाप मदोद्रेकं यत्राकृत्यं न किञ्चन ॥
अन्यदा गगने भ्राम्यन् रत्नशालपुरप्रभोः ।
खेचरस्य प्रियां दृष्ट्वा जातोऽस्मि स्मरविह्वलः ॥
सहसा तामपाहार्षं मांसपेशीं यथा खगः ।
कन्दर्पविवशानां हि क्व प्रेक्षापूर्वकारिता ॥
तामादाय कुरङ्गाक्षीमिहायातमरुद्ध माम् ।
पृष्ठागतः पतिस्तस्या नकुलः पन्नगं यथा ॥
मां विनिर्जित्य युद्धेन प्रापय्य च दशामिमाम् ।
स जगाम निजं स्थानं गृहीत्वा गृहिणीं निजाम् ॥
तदेवं व्यसनाम्भोधौ मग्नो येनाहमुद्धृतः ।
स निष्कारणबन्धुस्त्वं महात्मन् ! मम वर्तसे ॥
अतो रूपपरावर्तविद्यामादाय मे प्रियम् ।
कर्तुमर्हसि यत् सन्तः प्रार्थनाभङ्गभीरवः ॥
परोपरोधप्राधान्यादग्रहीत्तां पुरन्दरः ।
परस्त्रीसंगमोद्विग्नः स्वस्थानं सूर्पको ययौ ॥
अथ सज्जनवत्तत्र सुखदः स्फुरितो मरुत् ।
जिनवाक्यमिवापास्तरजोगन्धपयोऽपतत् ॥
पुष्पवृष्टिरभूत्सृष्टेः पञ्चवर्णतयोत्कटा ।
साधोर्गुण इव व्योम्नि जजृम्भे दुन्दुभेर्ध्वनिः ।
क्रीडासद्म जगल्लक्ष्म्याः स्वर्णपद्मं व्यधुः सुराः ।
निषण्णः केवली तत्र राजहंस इवोज्ज्वलः ।
देशनां कर्तुमारेभे सदेवनरपर्षदः ।
तं नत्वा विस्मयस्मेरः कुमारो न्यषदत्पुरः ॥
जन्तुघातो मृषावादः स्तेयं युवतिसङ्गमः ।
परिग्रहश्च पञ्चामी मुच्यतां पापहेतवः ॥
इति श्रुत्वा भवोद्विग्नो निजगाद पुरन्दरः ।
भगवन् ! सर्वथा कर्तुं त्वदुक्तमहमक्षमः ॥
परस्त्रीत्यागमात्रं तु करिष्ये जीविताववधि ।
यद्विपाको मया दृष्टः संप्रत्येवातिदारुणः ॥

गुरुर्जगाद पुण्यात्मन्निदमेवातिदुष्करम् ।
इदमेव नरामर्त्यनिर्वाणश्रीनिबन्धनम् ॥
इदं विदधता भद्र ! त्वया सर्वमनुष्ठितम् ।
इदं पालयतो भावी महानभ्युदयस्तव ॥
ततः केवलिनं नत्वा परस्त्रीपरिहारतः ।
कृतार्थं मन्यमानः स्वं कुमारोऽगान्निजं गृहम् ॥
अन्यदा सुन्दरोद्देशदेशदर्शनलालसम् ।
कश्चिन्मागधमेकान्ते पप्रच्छ नृपनन्दनः ॥
किं त्वया भ्राम्यता पृथ्वीं दृष्टं किमपि कौतुकम् ।
सोऽवोचच्चेत्तवार्थे शुश्रूषा तन्निशम्यताम् ॥
अस्ति भोगिवधूभोग्याभोगं भोगपुरं पुरम् ।
पातालपुरवच्चित्रमशेषश्रीविभूषितम् ॥
तत्र शत्रुञ्जयो राजा शस्त्रशास्त्रकृतश्रमः ।
शिरांसि धूनयामास विद्विषां विदुषां च यः ॥
गिरीशस्येव गङ्गोमे द्वे देव्यौ तस्य वल्लभे ।
एका रत्नवती नाम द्वितीया मदिरावती ॥
शुद्धबुद्धिरिवासूत नीतिं रत्नवती सुताम् ।
रामणीयकविस्फूर्जत्कीर्तिं नाम्ना कलावतीम् ॥
यस्याः शरीरसौन्दर्यं विभाव्य भुवनाद्भुतम् ।
ह्रियेव दर्शनं लोके न यच्छन्ति सुराङ्गनाः ॥
कलाकलापे सकले कलयामास कौशलम् ।
सा क्रमान्मदनक्रीडावनं प्राप च यौवनम् ॥
रूपादिभिरपश्यन्ती पुरुषं तुल्यमात्मनः ।
पुरुषद्वेषिणी साऽभूदित्याश्चर्यं मयेक्षितम् ॥
इत्याकर्ण्य दिदृक्षुस्तां निशितासिकरो निशि ।
अनिवेद्यैव कस्यापि कुमारो निर्ययौ पुरात् ॥
स सरोऽद्रिसरिद्ग्रामनगराकरसङ्कुलाम् ।
भुवं भ्राम्यंस्तरुस्तोमरम्यां प्राप महाटवीम् ॥
मध्याह्नातपतप्तोऽसौ तरुमूले कृतस्थितिः ।
महापुरुष ! मां रक्षेत्यश्रृणोत्करुणस्वरम् ॥

केनापि पीड्यते काचित् वराकीति स चिन्तयन् ।
बिभ्रत् कृपां कृपाणं च तं शब्दं प्रत्यगाद्द्रुतम् ॥
सोऽपश्यत् काननस्यान्तः स्त्रीमेकां कलशस्तनीम् ।
पद्मास्यां पल्लवाताम्रपाणिपादां मृगेक्षणाम् ॥
दिक्षु चक्षुः क्षिपन् कञ्चिददृष्ट्वा तत्र मानुषम् ।
आबभाषे कुमारस्तां कस्त्वां भद्रे ! विबाधते ॥

स्त्री—

यतः प्रभृति दृष्टस्त्वं तदादि मदनः प्रभो ! ।
मां पीडयति पञ्चेषुरप्यसंख्यैरिवेषुभिः ॥
त्वमेव मदनस्पर्द्धी शरणं मम नापरः ।
तत्त्वं निजभुजस्तम्भमध्यमारोप्य रक्ष माम् ॥

कुमारः—

त्वां परस्त्रीं कथं भद्रे ! स्वकराभ्यां स्पृशाम्यहम् ।

स्त्री—

पुरुषस्य परैव स्त्री सर्वेति प्राज्ञ ! चिन्तय ॥

कुमारः—

यद्यप्येवं तथापि त्वं मम नासि परिग्रहे ।

स्त्री—

महान्तो नाथ ! मन्यन्ते जगत्सर्वं परिग्रहे ॥

कुमारः—

तथापि तव सम्भोगः करोति दुरतिक्रमम् ।
उभयोर्लोकयोर्दुःखमतस्त्वां कथमाद्रिये ॥

स्त्री—

स्मरार्त्ता सानुरागाऽहं स्वामिंस्तन्मम सङ्गमः ।
कुर्यात्तव ममाप्येवमुभयोर्लोकयोः सुखम् ॥

कुमारः—

सर्वथा न करोम्येष परस्त्रीस्पर्शपातकम् ।
ततः किममुना साकं त्वया वाक्कलहेन मे ॥
इत्युक्त्वा स वनात्तस्मान्निर्गत्य वलितोऽग्रतः ।
तमाचचक्षे साक्षेपमेकः शस्त्रीकरः पुमान् ॥

परस्त्रीविप्लवं कृत्वा मागास्तिष्ठ पुरो मम ।
तस्य सिंह इवेभस्य कुमारः संमुखः स्थितः ॥
जगाद च सदैवाहं परस्त्रीणां पराङ्मुखः ।
संमुखः परशस्त्रीणां ब्रूहि यत्तेऽभिवाञ्छितम् ॥
दिव्यरूपधरो भूत्वा सोऽब्रवीत्तिष्ठताग्रतः ।
सर्वत्र शुचयो धीरा इति सत्यीकृतं त्वया ॥
अहं स्वामी वनस्यास्य व्यन्तरः पिङ्गलाभिधः ।
अद्य वेलावनेऽम्भोधेर्मित्रपार्श्वमहं गतः ॥
निवृत्य यावदायातस्तावद्वीक्ष्ये निजां प्रियाम् ।
प्रार्थनां तव कुर्वाणां प्रच्छन्नोऽहं स्थितस्ततः ॥
तृणवत्तामवज्ञाय यत्त्वं सत्त्वमहोदधिः ।
प्रस्थितोऽसि तदाश्चर्यं दुष्करं किमतः परम् ॥
तुष्टोऽहं किं ददे तुभ्यं अथावादीत्पुरन्दरः ।
भद्र ! किं न त्वया दत्तं ददता दिव्यदर्शनम् ॥
तस्मै याच्ञाऽनभिज्ञायाप्यमोघं देवदर्शनम् ।
इति जल्पन् सुरश्चिन्तारत्नं दत्वा तिरोदधे ॥
चिन्तारत्नप्रभावेण प्राप्तसर्वसमीहितः ।
त्यागं भोगांश्च कुर्वन् स क्रमाद्भोगपुरं ययौ ॥
राजपुत्रीमुपायेन पश्यामीति पुरन्दरः ।
वामनः समभूद्रूपपरावर्तनविद्यया ॥
कथागीतादिभिः कुर्वन् पुरलोकस्य विस्मयम् ।
जगाम वामनः ख्यातिं गुणा हि यशसः पदम् ॥
अन्यदाऽऽश्चर्यकारीति नृपेणाहूय वामनः ।
त्वमस्मत्सन्निधौ तिष्ठेरित्युक्तः स तथाऽकरोत् ॥
कलाविद् वामनश्चायमिति जातकुतूहला ।
चेटीं प्रेष्यात्मनः पार्श्वे तमाह्वत कलावती ॥
सा प्रीतिमगमद् दृष्टे वामनेऽपि नृपात्मजे ।
कुर्यात् कुमुदिनीं स्मेरां मेघच्छन्नोऽपि चन्द्रमाः ॥
दृष्ट्वा राजसुतां हृष्टो दध्यौ मनसि वामनः ।
अस्यां प्रकर्षमारूढं रूपनिर्माणकौशलम् ॥
वक्त्रं चन्द्रविजित्वरं यदधरो बन्धूकबाधाबुधः

कण्ठः कम्बुविडम्बकोऽक्षियुगलं नीलोत्पलश्रीहरम् ।
पाणिद्वन्द्वमशोकपल्लवरुचां लुण्टाकमस्यास्ततः
कोऽप्यन्यत्कृतपूर्वसृष्टिमहिमा धातुः प्रयत्नो ध्रुवम् ॥
अथ पृष्टः कलावत्या कुत्रत्योऽसीति वामनः ।
विलासपुरवास्तव्योऽस्मीति स प्रत्यपीपदत् ॥
किं तत्र नगरे किञ्चिदस्ति वस्त्वद्भुतं वद ।
इति प्रोक्ते कलावत्या साकूतं वामनोऽब्रवीत् ॥
तत्र सिंहरथो राजा तस्य पुत्र पुरन्दरः ।
यः सौन्दर्यकलौदार्यविक्रमादिभिरद्भुतः ॥
इत्याकर्ण्य कुमारं प्रत्यनुरागं चकार सा ।
को वा न रज्यते लोकः श्रुतैरप्यद्भुतैर्गुणैः ॥
त्यक्तान्यसर्वव्यापारा चिन्तयन्ती पुरन्दरम् ।
योगिनीव परात्मानं दिवसानि निनाय सा ॥
आसने शयने रात्रौ दिवसे भवने वने ।
नाससाद रतिं क्वापि शफरीव स्थले स्थिता ॥
जलार्द्रांसुमनःशय्याचन्द्रचन्दनपङ्कमान् ।
प्रपञ्चितवपुस्तापान् मेनेऽग्नीनिव पञ्च सा ॥
इतश्च गीतं शृण्वन्त्या वामनस्य मनोहरम् ।
मदनो मदीरावत्या मनो बाणैरताडयत् ॥
सा निशीथे नृपं सुप्तं त्यक्त्वोत्थाय शनैः शनैः ।
प्रस्थिता वामनभ्यर्णमङ्गरक्षैरलक्षिता ॥
विबुद्धो नृपतिः क्वासौ चलितेति विचिन्तयन् ।
मन्दं मन्दं पदन्यासमन्वगान्मदिरावतीम् ॥
गत्वा व्यबोधयद्देवी वामनं मधुरोक्तिभिः ।
करिष्यति किमेषेति ज्ञातुं छन्नो नृपः स्थितः ॥

वामनः—( देवीमालोक्य )

देवता सदृशी का त्वम् ?

देवी—

देव्यहं मदिरावती ।

वामनः—

अत्रागतासि किं कर्तुं

देवी—

कामार्ता त्वामुपासितुम् ॥

वामनः—

कुरूपो धनहीनोऽहं मुग्धे ! किं मामुपस्थिता ।
रूपनिर्जितकन्दर्पः पृथ्वीनाथः पतिस्तव ॥

हंसं हित्वा कलयसि बकं रत्नमुत्सृज्य धत्से
काचं कार्त्तस्वरमवगणय्यारकूटं बिभर्षि ।
दुग्धं त्यक्त्वा पिबसि विकले ! काञ्जिकं यद्विमुच्य
क्षोणीनाथं रचयसि रुचिं सेवितुं वामनं माम् ॥

राजा ( स्वगतम् )—

साधु वामन ! धन्योऽसि यः स्तौष्यन्यं स्वनिन्दया ।
स्वं निर्गुणमपि प्रायो मन्यन्ते गुणिनं जडाः ॥

देवी—

तदेव सुन्दरं तस्य यद्यस्य प्रतिभासते ।
विमुच्य करभश्चूतं करीरे कुरुते रतिम् ॥
तन्नाथ ! किं विचारेण मद्वचः कुरु सत्वरम् ।
प्रियस्त्वं मे नरेन्द्रस्तु द्वेष्यो वार्धकदूषितः ॥

राजा ( स्वगतम् )—

ताश्चटूक्तीः पुरा श्रुत्वा देवीवदननिर्गताः ।
चटूक्तीः सांप्रतं शृण्वन्न किं हृदय ! भिद्यसे ॥

वामनः—

चक्षुषाऽपि निरीक्षेऽहं नान्यामपि परस्त्रियम् ।
किं पुनर्भवतीं भद्रे ! महाराजस्य वल्लभाम् ॥

राजा ( स्वगतम् )—

शरीरेणैव वत्स ! त्वमहो ! वामन ! वामनः ।
कर्मभिः पुनरुत्तुङ्गस्त्वमेव जगतोऽप्यसि ॥

देवी—

परस्त्री किमहं मूर्ख ! या त्वां स्वयमुपस्थिता ।
परस्त्री कथिता सा हि या बलादुपपद्यते ॥

वामनः—

परस्त्रीं सेवितुं जातु चित्तमुत्सहते न मे ।
जननीव नमस्कार्या त्वं देवि ! मम तद्व्रज ॥

देवी—

करोषि यदि मे वाक्यं यदिच्छसि ददामि तत् ।
भविष्यत्यन्यथा मूढ ! सन्देहो जीवितेऽपि ते ॥

वामनः—

अखण्डितचरित्रस्य मृत्युरप्यस्तु मे वरम् ।
लभ्यते यदनाचारात् साम्राज्येनापि तेन किम् ॥
इति प्रार्थयमानासौ वामनेन निराकृता ।
विलक्षीभूय संप्राप स्वस्थानं मदिरावती ॥
राजाऽपि शयने गत्वा चिन्तयामास चेतसि ।
अहो ! दुश्चरितं स्त्रीणां विचाराणामगोचरः ॥
अकृतान्याङ्गनासङ्गं सर्वाभीष्टार्थपूरकम् ।
मां विहाय विधत्ते हा ! किमेषा वामने मनः ॥
प्रेमसर्वस्वशंसीनि कुर्वत्यपि चटूनि मे ।
रमतेऽसौ हृद्यन्यत्र वेत्ति स्त्रीचरितं हि कः ॥
किं तडित्करिकर्णाद्या येन द्रव्येण निर्मिताः ।
स्त्रीणां चित्तस्य निर्माणे तदेव विधिनाऽऽहृतम् ॥
धिङ्मां विषयगृद्धं यद्विषयाः स्त्रीनिबन्धनाः ।
स्त्रीणां चरित्रमीदृक्षं यद्वक्तुमपि नोचितम् ॥
अहो ! मे मन्दभाग्यत्वं कालेनैतावतापि यत् ।
नैकोऽपि समभूत् पुत्रो यं राज्ये स्थापयाम्यहम् ॥
कलावत्यपि चेत्कुर्याच्चित्तं राजसुते क्वचित् ।
तत्तमेव निजे राज्ये निवेश्य व्रतमाददे ॥
इति चिन्ताजुषो राज्ञः प्राज्यानर्थनिबन्धनम् ।
जघान्विषयतृष्णेव निशा नाशं समासदत् ॥
रुद्धदृष्टिस्तमस्तोमः प्राप मोह इव क्षयम् ।
दोषान्तमुदयं लेभे विवेक इव भास्करः ॥
अत्रान्तरे प्रतिहार्या विज्ञप्तः पृथिवीपतिः ।

देव ! चित्तं कलावत्या यन्न रेमे नरे क्वचित् ॥
साम्प्रतं वामनाख्याते राजपुत्रे पुरन्दरे ।
बद्धोत्कण्ठं तदस्वस्थं न क्वापि लभते रतिम् ॥
इति श्रुत्वा नृपो हृष्टः कलावत्या गृहं ययौ ।
आहूय वामनं तत्र निजगाद सगौरवम् ॥
छन्नरूपस्त्वमेवासि राजपुत्रः पुरन्दरः ।
उत्तमैश्चरितैर्ज्ञातस्तदात्मानं प्रकाशय ॥
राजा रजनीवृत्तान्तं जानातीति विचिन्त्य सः ।
अहो ! देवस्य दक्षत्वं इत्युक्त्वा स्वमदर्शयत् ॥
जगाद च निशम्याहं राजपुत्रीं गुणोज्ज्वलाम् ।
कृतरूपपरावर्तः कौतुकाद्द्रष्टुमागतः ॥
मङ्गलार्थं पुरस्कृत्य कुचकुम्भौ नृपात्मजा ।
प्रेमार्द्रां तन्मुखे दृष्टिं पुष्पवृष्टिमिवामुचत् ॥
राजा तमद्भुतं दृष्ट्वा निजां पुत्रीं च तादृशीम् ।
अवोचदनयोर्युक्तः सम्बन्धस्तुल्यरूपयोः ॥
प्रशस्तेऽह्नि शुभे लग्ने विभूत्याऽतिप्रकृष्टया ।
अकारयत्तयोर्भूपः पाणिग्रहणमादरात् ॥
कृतार्थः पार्थिवो राज्ये स्थापयित्वा पुरन्दरम् ।
प्रतिपेदे स्वयं दीक्षामार्हतीं गुरुसन्निधौ ॥
एवं परस्त्रीनियमात् प्रकृष्टां पुरन्दरः प्रापदिहापि ऋद्धिम् ।
परत्र चासादितवाञ्छितार्थो गीर्व्वाणनिर्वाणसुखानि लब्धा ॥

इति परस्त्रीविरतौ पुरन्दरकथा ॥

---

दुपय-चउप्पय-धण-धन्न-खेत्त-घर-रुप्प-कणय-कुप्पाण ।
जं परिमाणं तं पुण अणुव्वयं पंचमं विंति ॥
जीवो भवे अपारे गरुय-परिग्गह-भरेण अक्कंतो ।
दुह-लहरि-परिक्खित्तो बुड्डइ पोओ व्व जलहिम्मि ॥
धम्माराम-खयं खमा-कमलिणी-संघाय-निग्घायणं
मज्जाया तडि पाडणं सुह-मणो-हंसस्स निव्वासणं ।
वुड्ढिं लोह-महण्णवस्स खणणं सत्ताणुकंपा-भुवो

संपाडेइ परिग्गहो गिरिनई-पूरो व्व वड्ढंतओ ॥
लोह-परिचत्त-चित्तो जो कुणइ परिग्गहस्स परिमाणं ।
सो परभवे परिग्गहमपरिमियं लहइ नागो व्व ॥
अत्थि एत्थेव दीवे भारहे वासे कुसुमपुरं नयरं ।
दट्ठुं मज्झट्ठियमत्थ-वित्थरं हरिउमुज्जया चोरा ।
फलिह-भवणेसु विरमंति भित्ति-हयमत्थया जत्थ ॥

तत्थ सीहविक्कमो राया ।

जस्स समरम्मि दट्ठुं विमुक्क-कोसं करम्मि करवालं ।
हारिवडिय व्व सहसा कोसं मेल्लंति रिउणो वि ॥

तस्स सयलंतेउर-सारा तारा देवी । तीए गब्भ-संभूओ रूवाइ-गुणेहिं भुवणच्छरिय-भूओ सयल-कला-कलाव-कुलहरं हरिविक्कमो कुमरो । कयाइ वियड्ढ-गोट्ठीए ठियस्स तस्स पढियं केणावि—

नियपुन्न-परिक्खाए देस-वेस-भासा-विसेस-विन्नाणं ।
नव-नव-कोउग-दंसणमेगत्त ठियाण न हवंति ॥

इमं सोऊण चिंतियं कुमारेण मए देसंतरं गंतव्वं ति । तओ कस्सवि अकहिऊण रयणीए निग्गओ कुमारो । परिभमंतो पत्तो कंचणउरं । तत्थ पओसे पविसिउं पयट्टो । पहरण-पाणि-पाइक्क-परिक्खियाइं पिहियाइं पओलि-दाराइं दट्ठूण नियत्तो पसुत्तो परिसराराम-मज्झे पल्लव-सत्थरे । पहाय-प्पायाए रयणीए पबुद्धो पेच्छए पुरओ गयणंगणे अणप्प-मणि-देप्पमाणं विमाणं । तम्मज्झ-गयाए गरुडारूढाए कणयावदाय-देहाए चक्क-दिवि-डिक्किय-कराए देवयाए भणिओ सो—भो कुमार ! आरोहसु विमाणमेयं । तुहाणयणत्थमेत्थागया अहं । तेण तं पणमिऊण कयंजलिणा जंपियं—देवि ! का तुमं, कत्थ किमत्थं वा नेसि मं ? । देवयाए भणियं—कुमार ! अत्थि एसा विसाल-साला विसाला नयरी । तत्थ इक्खागु-कुल-कमल-सूरो सूरो राया । तस्साहं कुल-देवया चक्केसरी । सो राया संपयं अपुत्तो पत्तो पर-लोयं । तस्स गोत्तिया रज्जत्थिणो पयट्टा कलहिउं, भणिया पहाणेहिं—भो ! किं कुल-क्खयं कुणह । अच्चेमो चक्केसरि-कुल-देवयं । सा जं भणिस्सइ सो राया होहि त्ति । तहेव तेहिं कए वुत्ता मए गुत्तिया—नत्थि तुम्ह रज्ज-जुग्गया ।

जं पुरिसमहं रज्जे ठावेमि करेह तस्स पय-सेवं ।
रज्जं पुण पाविज्जइ पुन्नेहिं पुराणुचिन्नेहिं ॥

मुणिउं तुमं अवहिणा इहागयं आगयाहमाणेउं ।
हरिविक्कम-कुमर ! तओ लहु आरोहसु विमाणमिणं ॥
तो आरूढो कुमरो गयं विमाणं नरिंद-भुवणम्मि ।
सयल-पहाण-समक्खं ठविओ देवीए सो रज्जे ॥
देवीइ तस्स दिन्नं चूडारयणं अणप्प-माहप्पं ।
जत्थ सिरत्थे निवडंति मुच्छिया महियले रिउणो ॥
सव्वेहिं वि सो नमिओ नयरम्मि महूसवो समारद्धो ।
आहरण-रयण-वुट्ठिं काऊण तिरोहिया देवी ॥

नएण रज्जं कुणंतस्स तस्स अन्नया आगया करहमारूढा दुवे पुरिसा । विन्नत्तो तेहिं राया एगंते—अत्थि निय-विहव-विहिय-सुरपुर-पराजयं जयपुरं नयरं । तत्थ पच्चत्थि-पत्थिव-दुज्जओ जयो राया । तस्स रइ व्व सुंदरी रइ-सुंदरी देवी । रज्ज-सुहं सेवंताण ताण लच्छि व्व कमलच्छी जाया जय-लच्छी धूया । तीए जम्म-दिणे कहियं जोइसिएण, जहा—एसा कन्नगा चउण्हं रज्जाणं सामिणो पत्ती होहि त्ति । सा संपयं पवन्ना तारुन्नं । रन्ना अन्न-रज्ज-लाभत्थिणा सयं चेव सा परिणेउमारद्धा । विन्नत्तो पहाणेहिं राया—देव ! उभय-लोय-विरुद्धं ति न जुत्तं काउमेयं ति ।

जओ—

जेण कुलक्कमु लंघियइ अवजसु पसरइ लोइ ।
तं गुरु-रिद्धि-निबंधणु वि न कुणइ पंडिओ कोइ ॥
ता रज्ज-कारणं पि हु धूय त्ति इमा परस्स दायव्वा ।
जइ सोवण्णिय-छुरिया हंतव्वो किं तओ अप्पा ॥

रन्ना भणिया पहाणा—तहावि अन्नस्स न दायव्व त्ति, विणासेह एयं । तओ तेहिं कया कन्ना पच्छन्ना । कहियं रन्नो विणासिय त्ति । तं जीवंतिं नाऊण कुद्धो राया तेसिं । तओ तेहिं पेसिया अम्हे तुम्ह पासं, विन्नत्तं च इमं, जहा—एस राया अणायार-परो पर-लोय-परम्मुहो महु-महुर-विसयासत्तो सत्त-रहिओ हिओवएसं पि विसं व मन्नए । तुमं पुण एयविवरीओ रायरिसी। ता जइ एगागी आगच्छसि तो इमं दुरप्पाणं परिच्चयामो त्ति । रन्ना चिंतियं—जुत्तमिणं । जं सामी वि मुक्कमज्जाओ मुच्चइ त्ति । जं पुण 'जइ एगागी आगच्छ-सि'त्ति तं किं फलं । हुं नायं, सत्त-परिक्खण फलं ति । तओ रज्जसुत्थं काऊण गओ तेहिं सह जयपुरं । पडिच्छिओ पहाणेहिं । परिणाविओ पच्छन्नं जय-

लच्छि । पच्छा पयासिओ लोए । निवेसिओ रज्जे । निग्गओ नयराओ सयं चेय जओ । अणुरत्त-पयइ-वग्गं पालइ रज्जं हरिविक्कमो ।

अन्न-दिणे सिरिपुर-नयर-सामिणा चंडसेण-राएण ।
नियं-दूयं पट्ठविउं भणिओ हरिविक्कमो एवं ॥
जो तुह पुव्व-नरिंदेहिं मज्झ दिन्नो निरंतरं दंडो ।
तं संपइ देसु तुमं पि अन्नहा होसु रणसज्जो ॥
जो पुव्व-पत्थिवेहिं दिन्नो दंडो तमेव संभरसु ।
देमि न दंडमहं पुण घेत्तुं वंछामि तुह पासे ॥
इय हरिविक्कमराएण जंपिए नियपुरं गओ दूओ ।
गंतूण तेण कहियं पुव्वुत्तं चंडसेणस्स ॥
तं सोउं सो कुविओ चलिओ चउरंग-सेन्न-परियरिओ ।
तत्तो पत्तो हरिविक्कमो वि निय-देस-सिमंते ॥
दुण्हवि दलाइं मिलियाइं ताण जायं जएक्क-चित्ताणं ।
कुड्डु-वसागय-सुर-खयर-सिद्ध-रुद्धंबरं जुद्धं ॥
पहरण-संघट्ट-समुच्छलंत-हुयवह-फुलिंग-छउमेण । .
खुर-रय-घणंधयारे रणम्मि रेहंति खज्जोया ॥
हरिविक्कम-सेन्नेणं जलहि-जलेणेव उच्छलंतेण ।
निव-चंडसेण-सेणा नइ व्व पच्छामुही विहिया ॥
तो चंडसेण-निवई कुविओ उट्ठेइ पवल-बल-कलिओ ।
हरिविक्कम-सेन्नं मंदरो व्व जलहिं विलोडेइ ॥
थक्को एक्को हरिणो हरि व्व हरिविक्कमो पुरो तस्स ।
रवि-मंडलं व दित्तं सिरम्मि चूडामणिं काउं ॥
चूडामणि-माहप्पेण चंडसेणस्स आगया मुच्छा ।
पडियाइं पहरणाइं हत्थेहिंतो ससिन्नस्स ॥
हरिविक्कम-सुहडेहिं गहिओ पुंजीकयाइं ताइं पुरो ।
तत्तो चूडारयणं सिराउ ओसारियं रन्ना ॥
सत्थी हूओ दट्ठूण चंडसेणो ससिन्नमप्पाणं ।
पहरण-रहियं हय-विक्कमं च चिंतइ विसन्न-मणो ॥
एस हरिविक्कम-निवो अणन्न-सामन्न-पुन्न-पब्भारो ।
देवय-कय-सन्निज्झो मणुस्समेत्तं न होइ फुडं ॥

जं इमिणा सह जुद्धं पारद्धं तं मए कयमजुत्तं।
जो अप्प-पर-विसेसं न मुणइ सो होइ हसणिज्जो ॥
हा दंसिउं असक्को जणस्स वयणं अहं अजस-कलुसं।
ता किं करेमि संपइ हुं नायं जामि वण-वासं ॥
तो हरिविक्कम-पुरओ आगंतुं गिण्ह मज्झ रज्जमिणं।
इय भणिउं वन-वासं संपत्तो चंडसेण-निवो ॥
हरिविक्कमो सिरिउरं गंतूण करेइ तत्थ रज्ज-ठिइं।
अह पुरिसा कुसुमपुराउ आगया जणय-पट्ठविया ॥
वच्छ! अहं तुह विरहे दुहं ठिओ संपयं गिलाणोम्हि।
ता निय-रज्जं गिण्हसु इमं ति पुरिसेहिं विन्नत्तं ॥
तो तत्थ रज्ज-सुत्थं काउं हरिविक्कमो जणय-पासं।
चलिओ चउरंग-चमू-चमढिय-फणिराय-फणचक्को ॥
सो पत्तो कुसुमपुरं पणओ जणयस्स तेण अहिसित्तो।
रज्जे गुरु-रिद्धीए अह पर-लोयं गओ जणओ ॥
सो भूरि कणय-कोसं पयाव-पडिहय-पयंड-पडिवक्खं।
करि-तुरय-रह-समग्गं तिवग्ग-सारं कुणइ रज्जं ॥
अह अन्नया निसाए पच्छिम-जामम्मि सुह-विउद्धस्स।
जाया रन्नो चिंता पुव्व-भवे किं मए विहियं ॥
जं रज्जाण चउण्हं इमाण सामित्तमुत्तमं पत्तं।
इय चिंतं कुणमाणस्स निवइणो उग्गओ सूरो ॥
उज्जाण-वालएणं विन्नत्तं ताव देव! उज्जाणे।
सुर-कय-कमल-निसन्नो केवल-नाणी कहइ धम्मं ॥
तो परितुट्ठो राया जयलच्छी-संगओ गओ तत्थ।
नमिउं गुरुं निसन्नो धम्मकहं सोउमाढत्तो ॥
समए पुट्ठं रन्ना निसाइ जं चिंतियं चरम-जामे।
केवलिणा भणियं सुण नरिंद! जं पुच्छियं तुमए ॥
पुव्व-भवे आसि तुमं सिरिनयर-पुरम्मि सावगो नागो।
नागसिरि से भज्जा दुण्हवि नेहेण जंति दिणा ॥
अन्न-दियहम्मि तेसिं पुरओ पुरिसेण भणियमेक्केण।
जं अच्छरियं वित्तं इहेव नयरम्मि तं सुणह ॥

देसंतराओ कत्तो वि आगओ इह पुरे नरो एक्को ।
सयल-कला-कुल-गेहं रूवेण विणिज्जियाणंगो ॥
सो महिलाइ नव-जोव्वणाए दट्ठूण मयण-विहुराए ।
नीओ स-गिहं तंबोल-भोयणाईहिं गोरविओ ॥
तीए सह विसय-सुहं सेवंतो सो ठिओ कइवि दियहे ।
अन्न-दिणे अन्नाए नारीए कहवि सो दिट्ठो ॥
तीए वि नियं गेहं नीओ काऊण गरुय-सम्माणं ।
विसय-सुहं सेवंतीइ तीइ धरिओ चिरं कालं ॥
तस्स कए अन्नोन्नं दुन्निवि नारीउ ताउ कलहंति ।
अह कहमवि पढमाए एसो निय-गेहमाणीओ ॥
तस्स निसाए सुत्तस्स मत्थयं छिंदिऊण पट्ठवियं ।
गेहम्मि सवत्तीए पयंपिया सा पुणो एवं ॥
जइ तुह इमम्मि नेहो इमस्स ता मत्थएण सह कुणसु ।
जलण-पवेसमहं पुण एयकबंधेण सह काहं ॥
तो जलणम्मि पविट्ठाउ दोवि महिलाउ नेह-गहिलाओ ।
अविमरिसिय-कारित्तं अकित्तिमं काम-विहुराण ॥
तं असमंजसमायन्निऊण नागो भणेइ संविग्गो ।
इत्थीसु असंतोसो इमस्स जाओ मरण-हेऊ ॥
तोऽहं संतोस-कए गेण्हामि परिग्गहस्स परिमाणं ।
तं गेण्हइ सकलत्तो नागो गंतुं गुरु-समीवे ॥
तप्पभिइ होइ नागो आजम्मं एग-दार-संतुट्ठो ।
नागसिरी उण मणसावि कुणइ पर-पुरिस-परिहारं ॥
जिण-भवण-पडिम-पूयाउ कारवइ पुत्थए लिहावेइ ।
साहूण देइ दाणं सन्निज्झं कुणइ सड्ढाणं ॥
एवं मुच्छा-रहिओ नागसिरीए पियाइ सह नागो ।
धम्मे धणं निजुंजइ खंडइ न परिग्गह-पमाणं ॥
अन्न-दिणे आगंतुं नागं वागरइ वाणिओ एक्को ।
तुह पिउ-दव्वं घेत्तुं पत्तो देसंतरम्मि अहं ॥
तत्थेव ठिओ कारण-वसेण दव्वेण तेण तत्थ मए ।
दव्वं बहुयमुवज्जियमिण्हिं पुण आगओ इत्थ ॥

ता पिउ-दव्वं गिण्हसु तुमं इमं तो पयंपए नागो ।
जइवि मह जणय-दव्वं तहावि गेण्हामि नाहमिणं ॥
जं इमिणा गहिएणं खंडिज्जइ मह परिग्गह-पमाणं ।
तेण भणिओ वि पुण पुण जाव न गेण्हइ घणं नागो ॥
ता रयण-भूसण-घरो तियसो होऊण सो भणइ एवं ।
तुममेव नाग ! धन्नो पसंसिओ जो सुरिंदेण ॥
नागो जंपइ कह तत्थ मह पसंसाइ अवसरो जाओ ।
कहियं सुरेण एवं सक्कस्स सहा-निसन्नस्स ॥
पय-पणमत्थमेक्को पत्तो तियसो इमस्स सीसाओ ।
पडियं चूडारयणं तं गहियं अन्न-तियसेण ॥
तो झत्ति कण्हराईए पविसणत्थं पलायमाणो सो ।
वज्जेण हओ हरिणा सिरम्मि अन्नायकारि त्ति ॥
तं कंदंतं दट्ठुं मए हरी जंपिओ जइ सुरा वि ।
लोभ-ग्गहेण गहिया गिण्हंति परस्स रयणाइं ॥
ता मुत्तूण मुणिंदे नरलोए नत्थि कोवि निल्लोभो ।
हरिणा भणियं चिट्ठइ सिरिनयरे सावगो नागो ॥
निल्लोभ-चक्कवट्टी जो सपरिग्गह-पमाण-भंग-भया ।
तुह संतियं ति भणियं पि ढोइयं गिण्हइ न दव्वं ॥
तं सोउं रयणसिहो सुरो अहं तुह परिक्खण-निमित्तं ।
इत्थागओम्हि हरिणा पसंसिओ भद्द ! तुममेवं ॥
भणियं सुरेण मह कहसु किं पि किच्चं करेमि जं तुज्झ ।
नागेण जंपियं भद्द ! नत्थि मह किं पि करणिज्जं ॥
तियसो गओ सठाणं कालेण स-भारियाइ सह नागो ।
स-परिग्गह-परिमाणं णिद्दोसं पालिऊण मओ ॥
सोहम्मे संपत्तो तत्तो चविउं तुमं समुप्पन्नो ।
नागसिरी तुज्झ पिया जाया नरनाह ! जयलच्छी ॥
तो जाय-जाइसरणाइं दोवि जंपंति सच्चमेयं ति ।
संवेग-परिगयाइं पुत्तं ठविऊण निय-रज्जे ॥
सव्वं परिग्गहं वज्जिऊण गेण्हंति दोवि पव्वज्जं ।
काऊण तवं तिव्वं गयाइं सग्गं च मोक्खं च ॥

इति परिग्रहपरिमाणे हरिविक्रमकथा ।

---

दससु दिसासुं जं सयल-सत्त-संताण-ताण-कय-मइणो ।
गमण-परिमाण-करणं गुणव्वयं विंति तं पढमं ॥
जीवो घणलोभ-ग्गह-गहिय-मणो जत्थ जत्थ संचरइ ।
विद्दवइ पाणिणो तत्थ तत्थ तत्तायपिंडो व्व ॥
संतोस-पहाण-मणो दिसासु जो कुणइ गमण-परिमाणं ।
सो पावइ कल्लाणं इत्थवि जम्मे सुबंधु व्व ॥

तं जहा—

जंबू-जंबीर-कयंब-अंब-निउरंब-बंधुरारामा ।
जंबुद्दीवे भरहे कोसंबी नाम अत्थि पुरी ॥
पसरंत-परुप्पर-पणय-कलह-कोवेण अकय-जोगेण ।
मिहुणाण कुणइ पीडं चंदो च्चिय जत्थ रयणीसु ॥
तत्थासि वीरसेणो नरेसरो नीइ-कंदली-कंदो ।
पणमिर-पत्थिव-मत्थय-कुसुमावलि-लीढ-पयवीढो ॥
तस्सासि माणणिज्जो जिणदत्तो नाम सावओ सेट्ठी ।
तस्स तणओ सुबंधू गहिय-कलो जुव्वणं पत्तो ॥
रइ-सरिस-रूव-रेहं सुनंद-वणियस्स वसुमइं धूयं ।
गुरु-विहव-वित्थरेणं पिउणा परिणाविओ एसो ॥
वयवड-चवलत्तणओ समत्त-भावाण भव-समुत्थाण ।
पंच-नमोक्कार-परो पंचत्तमुवागओ सेट्ठी ॥
जह वच्चइ किरण-गणो अत्थमयंतेण सह दिणंदेण ।
तह अत्थमिओ अत्थो जणएण समं सुबंधुस्स ॥
धण-वज्जिओ सुबंधू बंधुयणस्स वि असम्मओ जाओ ।
सो च्चेव पिओ पायं जणस्स जं सेवए लच्छी ॥
अह अन्नया पयट्टो विउत्त-जण-मीण-हणण-केवट्टो ।
कय-तरुण-मण-प्पमओ महुसमओ मयण-दप्पमओ ॥

नच्चंत-रमणि-कंकण-कलाव
कल-सद्द-पबोहिय-कुसुम-चाव ।
अच्छेरय-रंजिय-तरुण-सत्थ
सुर-घरिहिं हुंति रहजत्त जत्थ ॥
जहिं कुसुम-गंध-लुद्धालि-जाल-

रव-भरिय-सयल-दिस-चक्कवालु।
नीसेस-जगत्तय-विजय-सज्जु
जंपंति व मयण-नरिंद-रज्जु॥
जहिं रत्त-सहहिं कुसुमिय-पलास
नं फुट्टए पहिय-गण-हियमास।
सहयारिहि रेहहि मंजरीओ
नं मयण-जलण-जालावलीओ॥
जहि मलय-समीरण-हल्लिरेहिं
नं नच्चइ लय-पल्लव-करेहिं।
परहुय-रवु पसरइ काणणेसु
नं माणिणि-मय-चाओवएसु॥
इय मयण-महा-महि-लोय-सहावहि भुवणि पयट्टइ महु समइ।
कय इत्थी-सत्थिहिं अत्थ-समत्थिहिं कीलण-थुवण-गमणमइ॥
अघण त्ति वसुमई पुण पारद्धा रोविउं विसन्न-मणा।
किं रोयसि त्ति पुट्ठा सुबंधुणा तीइ कहियमिणं॥
वर-वत्थ-नियत्थाओ रयणालंकार-मंडियंगीओ।
अन्न-रमणीओ माणंति अज्ज मयणूसवं नाह!॥
अणलंकिया कुवत्था अहं तु लज्जामि ताण मज्झम्मि।
तत्तो करेमि कहमूसवं ति रोयामि दीण-मणा॥
तत्तो सुबंधुणा सा भणिया मह परिभवो पिए एसो।
संपइ तुमं परिच्चय संतावं वरसु धीरत्तं॥
विवरं पि पविसिउं रोहणं पि खणिउं नहं पि आरुहियं।
जलहिं पि लंघिउं भमडियं च देसंतराइं पि॥
विढविय-बहुय-विहवो मणोरहा पूरणं तुह करिस्सं।
किं तेण जीविएण हि उवजुज्जइ जं न पियकज्जे॥
इय भणिऊण पहाए सुबंधुणा निग्गएण गेहाओ।
पुर-परिसरम्मि दिट्ठो मणपज्जव-संगओ समणो॥
धम्म-कहं कुणमाणं जणाण तं पणमिउं सुबंधू वि।
तस्स पुरओ निसन्नो कयंजली वोत्तुमाढत्तो॥
भयवं! किं ते वेरग्ग-कारणं जेण जुव्वण-भरे वि।

मणहर-मुत्ती वि तुमं पडिवन्नो दुक्करं दिक्खं ॥
मुणिणा भणियं सुण, इत्थ आसि नयरे गुणंधरो वणिओ ।
वरुण त्ति तस्स जणणी कुडिल-मणा गोमई गिहिणी ॥
न सुहाइ गोमईए सासू तो चिंतए वहू एवं ।
को सो होज्ज उवाओ जेण इमं नेमि पंचत्तं ॥
पइ-पुरओ जंपइ सासुयाइ दोसे वहू असंते वि ।
सो पियइ पाणियं तेत्तियं जेत्तियं भणइ घरिणी ॥
भणिओ सो जणणीए जणणिं दुलहु त्ति मावमन्नेसु ।
सो मग्गइ दोवि घणेण लहइ घरणिं न उण जणणिं ॥
तह वि न मन्नइ जणणिं गुणंधरो केवलं घरिणि-रत्तो ।
भणिया जणणीए वहू विरमसु मह कट्ठ-गोट्ठमे ॥
भणिउं वहू इमाए काउं बहु मोयगाइ-पक्कलं ।
दाहं तुह गोट्ठमे पुत्तो कट्ठाइं पुण दाही ॥
कहियं पइणो तीए जणणी वुड्ढ त्ति मइइ कट्ठाइं ।
तेणुत्तं किमजुत्तं विणोसइं वाहि-विगमो त्ति ॥
भणिया अणेण जणणी माए कट्ठाइं मग्गसि तुमं किं ।
कूडमिणं वहुयाए एवं होउ त्ति कलिऊण ॥
सा भणइ वच्छ ! एवं अन्न-दिणे तेण घरिणि-सहिएण ।
नीया जणणी पिउवणमत्थमिओ दिणयरो ताव ॥
सेसो जणो नियत्तो इमेहिं दोहिं पि विरइया चियगा ।
खित्ता य तत्थ जणणी तावग्गी नत्थि वीसरिओ ॥
भणिया गुणंधरेणं गिहिणी गेहाउ अग्गिमाणेसु ।
सा भणइ गिहं जंती इह चिट्ठंती य बीहेमि ॥
तो दोवि गयाइँ गिहं मरामि किमहं ति चिंतिउं जणणी ।
मुत्तूण चियं खिविउं अणाह-मडयं तहिं किं पि ॥
सयमारूढा रुक्खं गुणंधरो गोमई य आगंतुं ।
दहिऊण चियं गेहं गयाइं दुन्निवि पहिट्ठाइं ॥
मणि-कणय-भूसणाइं मुसिऊण पुराउ आगया तत्थ ।
चोरा दिव्व-वसेणं जणणी जत्थत्थि तरु-चडिया ॥
ते विभजिउं पयट्टा भणिया जणणीइ देह भागं मे ।

नूणं इमा मसाणे रयणीए रक्खसी कावि ॥
इय भय-विहुरा चोरा नट्ठा मुत्तूण सव्वमाभरणं ।
तं पुण गहिउं जणणी गया पभाए नियं गेहं ॥
दट्ठुं जणणिं पुत्तो वहू य दुन्निवि चमक्कियाइं मणे ।
कहमागय त्ति पुट्ठा सा विणय-पुरस्सरं तेहिं ॥
तीए कहियं सग्गे गयम्हि तो विम्हिएहिं तियसेहिं ।
दिन्नमिणं आहरणं तं घेत्तुं आगयाहमिमा ॥
भणियं वहूइ माए तं धन्ना जं सुरेहिं गोरविया ।
तीए वुत्तं थेवं गोरविया डोक्करि त्ति अहं ॥
जइ छोक्करिं कहवि ते लहंति तो गोरवं कुणंति बहुं ।
धण-लुद्धाए वहूइ भणियमहं तत्थ वच्चिस्सं ॥
गहियग्गि-सासुयाए तह पइणा सह गया मसाणम्मि ।
वहुया चियं पविट्ठा दड्ढा जलणेण झत्ति मया ॥
लहु एही मज्झ पिय त्ति चिंतिरेणं गुणंधरेण पुणो ।
पुण पुण भणिया जणणी आगच्छइ गोमई किं न ॥
तीए भणियं मग्गेण तेण तुह वल्लहा गया वच्छ ! ।
जेण पुणो न नियत्तइ अहं तु कत्थवि तया न गया ॥
कहिओ निय-वुत्तंतो य तस्स तेणावि जंपिया जणणी ।
तुमए कयमुचियमिणं सढे सढत्तं नहि अजुत्तं ॥
लोभाउ धण-निमित्तं चलिया सग्गं पि गोमई मूढा ।
पंचत्तं सा पत्ता तमेवमसमंजसं दट्ठुं ॥
वेरग्ग- मग्ग-लग्गो गुरु-पासे संजमं पवन्नो सो ।
एसो सोहं तव-वस-पसरिय-मणपज्जव-नाणो ॥
ता भो ! सुबंधु ! तुममवि विवर-पवेसाइणो बहु किलेसे ।
काउं वंछसि धण-लोभ-परिगओ तं पुण न जुत्तं ॥
देसंतराइं भमडउ पविसउ विवरम्मि लंघउ समुद्दं ।
आरुहउ नहं तहवि हु न पावए किं पि निपुन्नो ॥
तो संतोस-परेणं इह परलोए य कुसल-कामेण ।
उड्ढाहो-तिरिय-दिसासु गमण-माणं विहेयव्वं ॥
तं सोऊण सुबंधू जंपइ धन्नो मुणिंद ! तुममेव ।

जो गोमईइ चरियं दट्ठुं दिक्खं पवन्नोसि ॥
विसय-विवसो अहं पुण पवज्जं गिण्हिउं न सक्केमि ।
किंचि कय-कुसल-लाहं काहं दिसि-गमण-परिमाणं ॥
जोयणमेगं मुत्तुं उड्ड-दिसाए मए न गंतव्वं ।
आजम्ममहो-लोए विवर-पवेसो न कायव्वो ॥
तिरियं जलनिहि-तरणत्थमप्पणा पवहणे न चडियव्वं ।
निय-नयराओ जोयण-सयस्स परओ न गंतव्वं ॥
इय-दिसि-परिमाण-वयं मुणि-पय-मूले सुबंधुणा गहियं ॥
तो एसो विहवत्थी महीयलं भमिउमाढत्तो ॥
अगणिय-सरीर-दुक्खो बहु उवाए इमो कुणंतो वि ।
पत्तो न फलं जेणंतराय-विगमे हवइ सिद्धी ॥
गाम-नगरागराइसु भममाणेणं स-नियम-सीमंते ।
पत्तेण तेण चिंतियमओ परं मे न गंतव्वं ॥
एत्थंतरम्मि एसो भणिओ एक्केण जोगिणा एवं ।
भद्द ! तुमं किं दिससि विसन्न-चित्तो व्व मे कहसु ॥
भणियं अणेण भयवं ! दारिद्दं मे विसाय-हेउ त्ति ।
तो जोगिएण वुत्तं मह आएसं जइ करेसि ॥
अंक-वडियं व दासिं विहेमि ता तुज्झ अणुचरिं लच्छि ।
भणियं सुबंधुणा कहसु मज्झ जं किं पि करणिज्जं ॥
अह जोइएण भणियं—इहत्थि पव्वय-तले विवरमेक्कं ।
तत्थत्थि जक्खिणी सा तुट्ठा धणमिच्छियं देइ ॥
तत्थ मए सह पविससु, सुबंधुणा जंपियं मए विहिओ ।
विवर-प्पवेस-नियमो जावज्जीवं गुरु-समीवे ॥
जोगी जंपइ—गिरिणो इमस्स दो जोयणाइं तुंगस्स ।
सिहरम्मि कूवियाए सहस्स-वेहो रसो अत्थि ॥
गिरिमारुहिउं तं दोवि गिण्हिमो तेण साहिमो कणगं ।
भणइ सुबंधू—उड्ढं जोयण-परओ मह निवित्ती ॥
जोगी जंपइ—पवहणमारुहिउं जलहि-पर-तडं जामो ।
तत्थ खणिऊण रोहण-गिरिम्मि रयणाइं गिण्हेमो ॥
भणियं सुबंधुणा—पवहणम्मि चडिउं मए जलहि-तरणं ।

पुव्वं पच्चक्खायं, तो भणियं जोगिणा एवं ॥
ठाणाउ इमाउ जोयणेहिं बारसहिं अत्थि वित्थिन्नं।
सूरपुरं नाम पुरं तत्थत्थि महाबलो जक्खो ॥
सो मग्गिओ समप्पइ थेवेण कलंतरेण भूरि घणं।
गंतूण तत्थ ववहरसु तेण जेणेसरो होसि ॥
भणियं अणेण—मह नियं-पुराउ जोयण-सयं गमण-विसओ।
तं पुण्णमित्थ तत्तो अओ परं जामि न पयं पि ॥
कुविएण व भणियं जोइएण जं जं उवायमक्खेमि।
तं तं तुमं निसेहसि अहो अहन्नोसि निब्भग्ग ! ॥
भणियं सुबंधुणा तो पसिऊण सुणेह निच्छयं मज्झ।
नियमेण अभग्गेणं धणं न जइ होइ मा होउ ॥
सुक्ख-निबंधणु पंच-दिण धण-लवु अहिलसमाणु।
जम्म-परंपर-सुक्खकरु नियमु कु भंजइ जाणु ॥
अह चत्त-जोगि-रूवो रवि-मंडल-भासुरो सुरो होउं।
सो जंपिउं पवत्तो तुमं महासत्त ! धन्नोसि ॥
जम्मि समयम्मि तुमए मुणि-पय-मूले दिसि-व्वयं गहियं।
जक्खो गोमुह-नामो अहं पि तत्थेव आसि तया ॥
किं अच्चत्थ-धणत्थी निय-नियमं पालिही नवा एसो।
इय चिंतिऊण विहिया मए परिक्खा इमा तुज्झ ॥
तो अविचलेण सत्तेण तुज्झ तुट्ठो अहं इमं देमि।
कणयस्स लक्खमिक्कं गिण्ह तुमं जंपइ सुबंधू ॥
कह नेमि नियय-गेहं इक्कोहं कंचणं इमं जक्ख !।
तो जक्खेणुक्खिविउं खणेण सो निय-घरं नीओ ॥
कणगं समप्पिउं से जामि त्ति पयंपियं गओ जक्खो।
विम्हिय-मणो सुबंधू दट्ठुं धम्म-प्पभावमिणं ॥
पुज्जइ जिणं तिसंझं मुणीण दाणं निरंतरं देइ।
सयल-सुहि-सयण-मग्गण-मणोरहापूरणं कुणइ ॥
इय दिसि-परिमाण-वयस्स पेक्खिउं सो इहावि माहप्पं।
सेसाइं पि वयाइं गुरु-पय-मूलम्मि पडिवन्नो ॥
पज्जंत-कयाणसणो चित्तब्भंतर-फुरंत-परमेट्ठी।

मरिउं गओ सुबंधू सग्गं च कमेण मोक्खं च ॥

इति दिग्व्रते सुबन्धुकथा ।

---

बीयं गुण-व्वयं पुण भोयणओ कम्मओ य होइ दुहा ।
तं भोयणओ भोगोवभोग-माणं विहेयव्वं ॥
सइ भुञ्जइ त्ति भोगो सो पुण आहार-पुप्फमाईओ ।
उवभोगो य पुणो पुण उवभुञ्जइ भुवण-विलयाई ॥
असणस्स खाइमस्स य विरइं कुज्जा निसाइ जा जीवं ।
महु-मज्ज-मंस-भक्खण-पमुहाण य सव्वहा नियमं ॥
पनरस-कम्मादाणाइं कोट्टवालाइणो नियोगा य ।
तं कम्मओ पणीयं तत्थ करिज्जा बुहो जयणं ॥

पुरुषः पालयन् भोगोपभोगव्रतमादृतः ।
जयद्रथ इवाभीष्टं लभतेऽत्रापि जन्मनि ॥
तद्यथा भारतक्षोणीरमणीमणिकङ्कणम् ।
सुवर्णनिकराकीर्णमस्तिरत्नपुरं पुरम् ॥
यत्र त्रासः कुमणिषु सरोगत्वमम्भोजखण्डे
दण्डश्छत्रेष्वलिकफलकेऽलीकशब्दप्रवृत्तिः ।
चन्द्रापत्ये विधुतनयता मारवाक् पुष्पचापे
नद्यां रोधस्तरुषु कलिकोपक्रमो न प्रजासु ॥
तस्मिन् धनरथो राजा रणे यत्तरवारिणा ।
कृतवैरियशोहंसप्रवासेन घनायितम् ॥
तस्य काञ्चनगौरस्य श्रीदेवी नाम देव्यभूत् ।
विष्णुं कृष्ण इति त्यक्त्वा या बभौ श्रीरिवागता ॥
तया सार्धं स भुञ्जानो भोगान् शच्येव वासवः ।
निर्भरानन्दनिर्मग्नो गमयामास वासरान् ॥
अन्यदा सुषुवे पुत्रं श्रीदेवी दिव्यदर्शनम् ।
तस्य ऋद्ध्या नृपो नाम जयद्रथ इति व्यधात् ॥
पारीणः सर्वशास्त्राणां धुरीणः सर्वशस्त्रिणाम् ।
क्रमेण वर्द्धमानोऽसावजनिष्ट जयद्रथः ॥
स स्त्रीनेत्रमृगक्रीडावनं यातेऽपि यौवनम् ।
नादध्रे भूभुजां पुत्रीः परिणेतुमुपस्थिताः ॥

कदाचिद्राजपुत्रोऽसौ पुत्रजन्ममहोत्सवे ।
मन्त्रिणा मन्त्रगुप्तेन भोजनार्थं न्यमन्त्र्यत ॥
समये तद्गृहं गत्वा स सर्वरसपेशलाम् ।
भोक्तुं रसवतीं यावत् निषण्णः कनकासने ॥
तावत्तत्र मुनिः कश्चिन् मासक्षपणपारणे ।
भिक्षार्थं क्षमिणां धुर्यो धर्मो मूर्त्त इवागमत् ॥
तं दृष्ट्वेन्दुमिवोद्धन्वान् समुल्लाससुपागतः ।
तस्मै निष्पापमाहारं मन्त्री पुण्यमतिर्ददौ ॥
मांसानि घोलवटकानन्तकायानि चोत्क्षिपन् ।
दातुं दत्तावधानेन साधुना स न्यषिध्यत ॥
मन्त्रिणा प्रणतः साधुर्निर्गतः स्वाश्रयं ययौ ।
कुमारो भोजनं कृत्वा मन्त्रिणं पृष्टवानिदम् ॥
मांसादीन्यग्रहीद्यन्न मुनिः किं तत्र कारणम् ।
मन्त्र्यूचे देव ! नो वेद्मि न चाप्राक्षं मुनिं तदा ॥
यद्येषि त्वं तदा गत्वा पृच्छामः साम्प्रतं मुनिम् ।
कुमारोऽवोचदीदृक्षा द्रष्टव्याः परमर्षयः ॥
इत्युक्त्वा मन्त्रिणा सार्धं स मुनेराश्रमं ययौ ।
मुनिं नत्वा पुरस्तस्य प्राञ्जलिर्निषसाद च ॥

साधुरुग्रभवदावसमुत्थं विप्लवं प्रशमयंस्तनुभाजाम् ।
कर्तुमारभत मन्द्रनिनादो देशनामृतवृष्टिमिवाब्दः ॥
आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरत्वम् ।
धर्मकर्म न करोति जडो यः पोतमुज्झति पयोधिगतः सः ॥

कुमारोऽवसरेऽपृच्छत् किं त्वं मन्त्रिगृहं गतः ।
मांसादीन्यतिहृद्यानि दीयमानानि नाग्रहीः ॥
मुनिनोक्तं कुमारास्तां मुनीनां गृहिणामपि ।
जिनैर्निषिद्धं मांसादि व्रते भोगोपभोगयोः ॥
कुमारोऽवोचदाचक्ष्व मुने ! तत्कीदृशं व्रतम् ।
भोगोपभोगयोः सर्वं स्वरूपं तस्यासावब्रवीत् ॥
ततोऽसौ भोगयोग्यानां वस्तूनामकरोन्मितिम् ।
तत्याजाजन्म भोगार्थं रात्रावशनखादिमे ॥

मधुमांससुरादीनां नित्यं विरतिमग्रहीत् ।
उपभोगार्हवस्तूनां मानं कुर्वन्नसौ पुनः ॥
एकैव स्त्री ममाजन्म भोग्येति प्रत्यपद्यत ।
जगृहे गृहिणां धर्मो मन्त्रिणा साधुसन्निधौ ॥
उभावपि मुनिं नत्वा सद्धर्मप्रतिपत्तितः ।
धन्यं मन्यौ मुदापूर्णौ स्वं स्वं गेहमगच्छताम् ॥
अथ रात्रौ पितुः पादान् पर्युपास्य जयद्रथः ।
अङ्गरक्षपरिक्षिप्तः प्रसुप्तः स्वनिकेतने ॥
अरे ! गृह्णीत गृह्णीत हेति हत हतेति सः ।
जल्पन्निशीथे पल्यङ्कादाकर्षन् खड्गमुत्थितः ॥
तस्यैवं शब्दमाकर्ण्य पश्यद्भिः पत्तिभिर्दिशः ।
ददृशे केसरी साक्षात् कृतान्त इव भीषणः ॥
निजाङ्कमृगनिर्भेदभीतेन प्राभृतीकृताः ।
कला इव मृगाङ्केण यो दंष्ट्राः कुटिला ददौ ॥
हस्तिभ्रान्त्याहतान्मेघादात्तैरिव तडिद्गुणैः ।
कडारैः केसरैः कीर्णं स्कन्धदेशमुवाह यः ॥
तं हन्तुं पत्तयो यावत् करवालानुदक्षिपन् ।
निश्चक्राम मृगारातिस्तावत्तूर्णपदक्रमः ॥
पत्तिभिर्वार्यमाणोऽपि कुमारस्तस्य पृष्ठतः ।
ययौ शीघ्रमुभौ प्राप्तौ पुरप्राकारसंनिधिम् ॥
वप्रं बद्धप्रतोलीकं ललङ्घे फालया हरिः ।
विद्युदुत्क्षिप्तनाम्नाऽनुकरणेन नृपात्मजः ॥
प्राकारलङ्घनाशक्ता निवृत्ताः पत्तयः पुनः ।
अमुं कुमारवृत्तान्तं जवाद्राज्ञे व्यजिज्ञपत् ॥
कुमारान्वेषणं कर्तुं शोकमस्तोकमुद्वहन् ।
चतुरङ्गचमूयुक्तः क्ष्मापतिर्निरगाद् गृहात् ॥
कुमारपदचिह्नेन पथा गच्छन्बहिः पुरात् ।
वैरोट्या भवनेऽद्राक्षीत् कुमारं पतितं नृपः ॥
भूपः समुच्छलन्मूर्च्छासमुच्छादितचेतनम् ।
सद्यः शीतोपचारेण किञ्चित् स्वस्थीचकार तम् ॥

जगाद च निवर्तस्व वत्स ! यामो निजं गृहम् ।
सोऽवदज्जीवितं धर्तुं नाहं क्षणमपि क्षमः ॥
किं नीतेन मया तस्मात्स्वामिन्नत्रैव पावकम् ।
प्रवेक्ष्यामि पुरो देव्यास्ततो रचय मे चिताम् ॥
को हेतुर्जीवितं धर्तुं न क्षमोऽसीति जल्पितः ।
मुहुः पित्रा कुमारोऽभूत्त्रपयाऽवनताननः ॥
ह्रियाऽसौ कारणं वक्तुं न शक्त इति चिन्तयन् ।
कथयास्मै स्वमित्रायेत्यूचे राजा जयद्रथम् ॥
सोऽवोचच्छ्रूयतां मित्र ! निशीथे जाग्रता मया ।
दृष्टाऽद्य पुरतो बाला काचिल्लोचनरोचना ॥

शरच्चन्द्राम्भोजोत्पलकलशकुन्दप्रभृतयो
भजन्ते येऽन्यस्त्रीवपुरवयवानामुपमितिम् ।
त एवास्यास्तेषां निखिलभुवनासम्भवरुचां
पुरस्ताद्विन्यस्ता दधति नियतं किङ्करकलाम् ॥
विवृत्तशफराङ्गनालवणिमानमातन्वती-
स्तथा मयि मुमोच सा सरभसं कटाक्षच्छटाः ।
विजृम्भितरतिभ्रमो रतिपतिर्मुहुर्मां हृदि
क्रुधेव निशितैः शरैः प्रववृते प्रहर्तुं यथा ॥
कथय कमलवक्त्रे ! का त्वमत्रागता वा
किमिति मृदुवचोभिर्वच्म्यहं यावदेताम् ।
निभृतपदमकस्मादेत्य सिंहेन तावत्
झगिति कवलितैषा राहुणेवेन्दुलेखा ॥

तद्वधार्थं गृहीतासिरुत्थितोऽहं स निर्गतः ।
तस्याहं पृष्ठतो लग्नः सोऽत्रागत्य गतः क्वचित् ॥
स्त्रियास्तस्या विपत्तिर्मे जीवितत्यागकारणम् ।
कथितस्तेन मित्रेण वृत्तान्तोऽयं महीभृतः ॥
राज्ञोक्तं सा विपन्नेति विषादं वत्स ! मा कृथाः ।
यदन्या अपि विद्यन्ते भूपकन्या मनोहराः ॥
किं च लज्जावहं वह्निप्रवेशासद्ग्रहं त्यज ।
युक्तो नात्मवधः कर्तुं स्त्रीकृते कृतिनां यतः ॥

स्त्रीसिंहदर्शनं रात्रौ मायाप्येषा वितर्क्यते ।
दुर्घटस्तत्प्रवेशो हि मन्दिरे पत्तिभिर्वृते ॥
तदागच्छ गृहं वत्स ! मावधीर्मां स्वमृत्युना ।
जायन्ते जीवतः पुंसः कल्याणान्यखिलानि हि ॥
सोऽवोचत्सम्भवत्येषा तात ! मायापि किं त्विमम् ।
वृत्तान्तं देवतां पृष्ट्वा करिष्ये यदिहोचितम् ॥
कुरु प्रसादमत्रार्थे विघ्नं मे तात ! मा कृथाः ।
इत्युक्त्वा पुरतो देव्या निपपात जयद्रथः ॥
प्रधानपुरुषान् मुक्त्वा तत्पार्श्वेऽगान्नृपो गृहम् ।
किमन्यच्छक्यते कर्तुं मानुषे हि दृढाग्रहे ॥
सत्त्वाधारं निराहारं कुमारं कृतनिश्चयम् ।
सप्तमाहर्निशि प्रोचे प्रत्यक्षीभूय देवता ॥
भोः ! कुमार ! किमर्थं मामाराधयसि ?, सोऽब्रवीत् ।
देवि ! स्त्रीसिंहवृत्तान्तं वद मे, देव्यचीकथत् ॥
अस्ति स्वस्तिमती नाम पुरी पारेपरेऽम्बुधेः ।
योजनानां सहस्राणि सा बहूनि भवत्यतः ॥
तां प्रशास्ति नृपः शूरो राजराज इवालकाम् ।
न्यायविक्रमधर्माणामेको यः केलिमन्दिरम् ॥
तस्यास्ति विजयादेवी स्मरस्येव रतिः प्रिया ।
सा रूपनिर्जितश्रीकां श्रीमतीं सुषुवे सुताम् ॥
सा क्रमादक्रमाधीतकला प्राप्तापि यौवनम् ।
पुरुषद्वेषिणी केनाप्युद्वाहं सह नेच्छति ॥
ततश्चिन्ताब्धिनिर्मग्नो यावदस्ति धराधिपः ।
तावन्नैमित्तिकः कश्चिदागमद् व्योमवर्त्मना ॥
तं निवेश्यासने हैमे सत्कृत्य च नृपोऽब्रवीत् ।
श्रीमत्या मत्सुतायाः को भावी भर्त्तेति कथ्यताम् ॥
सोऽप्युवाच सहस्रेषु योजनानां बहुष्वितः ।
पुरन्दरपुरप्रख्यमस्ति रत्नपुरं पुरम् ॥
तस्मिन् घनरथो राजा तस्य सूनुर्जयद्रथः ।
सोऽस्याः पूर्वभवे भर्ता स एव स्यादिहापि च ॥

किंत्वेतयोर्विवाहेच्छा स्यात्परस्परदर्शने।
राज्ञोक्तमनयोस्तत्स्यादियद्दूरस्थयोः कथम् ॥
अद्यैव निशि कुष्माण्डी देवी तत्कारयिष्यति।
द्वादशेऽह्नि विवाहं च तदाराधय तां नृप! ॥
इत्युक्त्वाऽगान्निमित्तज्ञो राज्ञाऽऽराध्यत देवता।
प्रत्यक्षीभूय साऽवोचत् किं कार्यं नृप!, सोऽवदत् ॥
जयद्रथकुमारस्य श्रीमत्याश्च परस्परम्।
यथा स्याद्दर्शनं देवि! तथा मे कुर्वनुग्रहम् ॥
स्ववाहनहरिर्देव्या नियुक्तः श्रीमतीमिह।
आनीय दर्शयित्वा त्वां पुनस्तत्रैव नीतवान् ॥
इति श्रीसिंहवृत्तान्तः कुमार! कथितस्तव।
तेनोक्तं देवि! तत्राहं यथा यामि तथा कुरु ॥
मांसं समर्प्य वैरोट्या प्रोचे भुङ्क्ष्व झटित्यदः।
नभोगमनसामर्थ्यं येन स्यादद्भुतं तव ॥
सोऽवदद्देवि! मांसस्य प्रत्याख्यानमहं व्यधाम्।
देव्योक्तमधुनैवेदं तर्हि भक्षय दाडिमम् ॥
अस्य प्रभावाद्येन त्वं तत्र गत्वा निवर्तसे।
तेनोक्तं कथमद्मीदं विरतो रात्रीभोजनात् ॥
दिव्यकन्यां पुरस्कृत्य कुमारं देवताऽवदत्।
एतामुद्वह येन स्यास्त्वं खेचरशिरोमणिः ॥
तेनोचे मैवमादिक्षः कन्यां यद्युद्वहाम्यहम्।
श्रीमत्युद्वाहवाञ्छा मे व्रतभङ्गाय जायते ॥
एकैव ह्यस्तु मे पत्नीत्युपभोगव्रतं व्यधाम्।
ततः क्रुधेव वैरोट्या वक्तुमेवं प्रचक्रमे ॥
न करोषि ममादेशं स्वार्थमर्थयसे च यत्।
तन्मूर्खोऽसि प्रभोर्वामः फलं कोऽप्यश्नुते नहि ॥
तेनोक्तं देवि! कुर्वेऽन्यद्दुःसाधमपि ते वचः।
व्रतभङ्गो पुनर्येन स्यान्न तत्कर्तुमुत्सहे ॥
इत्यालोच्य व्रते दार्ढ्यं वैरोट्या तुष्टमानसा।
कुमारस्यार्प्पयामास गुटिके द्वे जगाद च ॥

करिष्यति मुखे क्षिप्ता तवैका व्योमगामिताम् ।
द्वितीया त्वीप्सितं रूपमित्युक्त्वा देवता ययौ ॥
कुमारः पश्यतां पुंसां गुटिकायाः प्रभावतः ।
उत्पत्य क्षणमात्रेण पुरीं स्वस्तिमतीमगात् ॥
श्रीपुञ्जश्रेष्ठिनो हट्टे निषसाद जयद्रथः ।
पृष्टस्तेन कुतः को वा त्वं महात्मन्निहागतः ? ॥
कुमारो जल्पतिस्मात्र प्राप्तो रत्नपुरादहम् ।
कौतुकेन भुवं भ्राम्यन् राजपुत्रो जयद्रथः ॥
स्थातव्यं मद्गृहे भद्र ! पितुर्गृह इव त्वया ।
इत्युक्त्वा तं गृहे नीत्वा श्रेष्ठी स्नानाद्यकारयत् ॥
तद्रूपालापशीलाद्यैः कुटुम्बं श्रेष्ठिनोऽर्थघात् ।
कुमारे तत्क्षणात्प्रीतिः गुणाः प्रेम्णो हि कारणम् ॥
श्रेष्ठिपुत्री विशेषेण स्वसेव प्रीतिमत्यभूत् ।
द्वितीयेऽह्नि कुमारेण सा पृष्टा सादरं भगे ॥
स्वसः ! किमद्य रात्रौ त्वं न दृष्टाऽथ जगाद सा ।
ममास्ति श्रीमती नाम भ्रातर्भूपसुता सखी ॥
तत्पार्श्वेऽहं स्थिता रात्रौ, सोऽवोचन्नय तत्र माम् ।
साऽवदद्वीक्षते नैषा पुरुषद्वेषिणी नरम् ॥
तेनोक्तं रमणीरूपं करिष्ये साऽभ्यधात्ततः ।
एवमस्त्विति तत् कृत्वा सोऽगात् तत्र तया समम् ॥
उवाच श्रीमती केयं सखि ! श्रेष्ठिसुताऽवदत् ।
मत्सखीयं कलास्तस्याः कापीत्यूचे नृपात्मजा ॥
श्रेष्ठिपुत्री जगादैवं वेत्त्येषा सकलाः कलाः ।
तदा च श्रीमती हंसीं वियुक्तां फलकेऽलिखत् ॥
तां जयद्रथ इत्यूचे त्वया विरहपीडिता ।
लिखितेयं परं नास्यास्तादृग् दृष्ट्यादि दृश्यते ॥
तर्हि त्वमालिखेत्युक्त्वा फलकं वर्णकैः सह ।
जयद्रथकुमाराय राजपुत्री समर्पयत् ॥
लिखित्वा तादृशीं सद्यो राजहंसीं जयद्रथः ।
श्रीमत्यै दर्शयामास तां सा दृष्ट्वैवमब्रवीत् ॥

आश्चर्यं चित्रचातुर्यं चित्ताभिप्रायसूचकम्।
तथा ह्यस्या दृशोर्युग्मं बाष्पबिन्दूनि च क्षरत्॥
प्रम्लानमाननं चञ्चूः शिथिलात्तमृणालिका।
ग्रीवाऽतीव श्लथा पक्षद्वन्द्वमुत्पतनाक्षमम्॥
शून्यं चेदमवास्थानमवस्थां विरहातुराम्।
आख्याति व्यक्तमेतस्या अनाख्यातामपि स्वयम्॥
कलाविदीदृशी कस्मादियत्कालं सखि! त्वया।
नानीतेयं गृहे क्षिप्त्वा निधानमिव किं धृता॥
इत्यादिभिर्विनोदैस्तास्तस्थुः प्रीतिपराश्चिरम्।
श्रेष्ठिपुत्री कुमारश्च भोक्तुं स्वं सद्म जग्मतुः॥
( ततः स्वं सदनं गत्वा विलम्ब्य च कियच्चिरं॥ —पाठान्तरम् )
मध्याह्नेऽगमदेकाकी स्त्रीरूपेण जयद्रथः।
श्रीमत्याः पार्श्वमालापैः क्षणं नीत्वा जगाद ताम्॥
रमणी रमणीयाऽपि विना पतिपरिग्रहम्।
ऋते सुवर्णसम्बन्धं मणीव न विराजते॥
ततः कञ्चिज्जगन्नेत्रानन्दनं नृपनन्दनम्।
विशालकुलसम्भूतं परिणेतुं त्वमर्हसि॥
राजपुत्री जगादैवं पूर्वं रूपादिभिर्गुणैः।
आत्मतुल्यमपश्यन्ती मर्त्यं कमपि नाश्रयम्॥
पश्चान्नैमित्तिकादिष्टदेवताराधनावशात्।
स मयाऽदर्शि यश्चित्ते टङ्कोत्कीर्ण इव स्थितः॥
लोकोत्तरगुणाधारं दूरस्थमपि तं विना।
न शक्रमपि भर्तारं कर्तुमिच्छति मे मनः॥
उवाचैवं कुमारस्त्री यद्येवं यौवनं तव।
भोगशून्यं वृथारण्ये मालत्या मुकुलं यथा॥
दविष्ठः स यतस्तस्य पक्षौ नोत्पतनक्षमौ।
न नभोगामिनी विद्या कथं स्यात्तेन सङ्गमः॥
वल्लभे दुर्लभे सुभ्रु! कुरुष्वान्यमपि प्रियम्।
किं हि शाल्योदनालाभे भुज्यते न युगंधरी॥
बभाषे श्रीमत्या न पतिस्तुचितं यद्यपि लभे

तथाप्यन्यं कर्तुं कथमपि न मे वाञ्छति मनः ।
क्वचित् किं न प्राप्तं श्रवणपथमाख्यानकमिदं
वरं शून्या शाला भवतु न पुनस्तस्करभृता ॥
तथा देव्या विवाहो मे कथितो द्वादशे दिने ।
दशाहानि गतान्यद्य द्वे दिने तिष्ठतोऽधुना ॥
तयोर्मध्ये विवाहार्थं ध्रुवमेष्यति मे प्रियः ।
सत्या हि देवतावाणी वामं स्फुरति चाक्षि मे ॥
ममाङ्गं त्वत्करस्पर्शात् किं च रोमाञ्चमञ्चति ।
त्वद्वक्त्रदर्शनादन्यत्कामयेते न लोचने ॥
त्वद्वाक्येनामृतेनेव सिक्तमुज्जृम्भते मनः ।
तदहं तर्कयाम्येवं स्त्रीरूपेण त्वमेव सः ॥
तं किं प्रत्यभिजानासि त्वमित्याख्यज्जयद्रथः ।
हसित्वा श्रीमती प्रोचे किमत्रार्थेऽपि संशयः ॥
कृष्ट्वाऽसौ गुटिकां वक्त्राज्जातः सहजरूपभृत् ।
तं दृष्ट्वा विकसच्चक्षुः श्रीमती विस्मिताऽवदत् ॥
अद्य पुण्यद्रुमो नाथ ! फलितो मे त्वदागमात् ।
त्वन्निमित्तमियत्कालं धृताः प्राणाः कुरुचितम् ॥
किन्तु त्वं कथमायातस्तत्र हेतुं जयद्रथः ।
देव्याराधनमाख्याय जगाम श्रेष्ठिमन्दिरम् ॥
राजा विदितवृत्तान्तो द्वितीयेऽह्नि जयद्रथम् ।
गौर्येव हिमवानीशं श्रीमत्या पर्यणाययत् ॥
दिनानि कतिचित्तत्र स्थित्वा प्रीतिपुरस्सरम् ।
गृहीत्वा श्वशुरानुज्ञां श्रीमतीं च जयद्रथः ॥
गुटिकायाः प्रभावेण व्योम्ना स्वपुरमगमत् ।
परितोषं परं पित्रोः शुचाविधुरयोर्व्यधात् ॥
इति घनरथ-पुत्रः प्राप भोगोपभोग-
व्रतविरचितचित्तश्चिन्तितं वस्त्विहापि ।
अयमधिगतमर्त्योरूत्थशर्मा क्रमेण
त्रुटितसकलकर्मा लप्स्यते मोक्षलक्ष्मीम् ॥
इति भोगोपभोगव्रते जयद्रथकथा ॥

---

